# संगीतसारामृतोद्धारः ।

अयं ग्रंथः

भालचंद्रशर्मणा

मुम्बय्यां

निर्णयसागरयंत्रालये कोलभाटवीथ्यां २३ नं०
बा. रा. घाणेकरद्वारा मुद्राक्षरैरंकयित्वा
प्राकाश्यं नीतः ।

शके १८३३. सन १९११.

॥ श्रीः ॥

# संगीतसारामृतोद्धारः ।

अयं ग्रंथः

भालचंद्रशर्मणा

मुम्बय्यां

निर्णयसागरयंत्रालये कोलभाटवीथ्यां २३ नं०

बा. रा. घाणेकरद्वारा मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतः ।

शके १८३३. सन १९११.

॥ श्रीः ॥

# अथ संगीतसारामृतोद्धारः प्रारभ्यते।

संगीतप्रणवं स्मृत्वा नत्वा तदुपदेशकम् ॥
शास्त्रप्रवर्तकांश्चैव भरतादिमुनीन् गुरून् ॥ १ ॥
श्रीशंभोः करुणासिंधोः प्रसादात्तुलजाधिपः ॥
सुखं बोधाय सद्रागविवेकं रचयत्यमुम् ॥ २ ॥
अथ स्वरश्रुतिग्रामजात्यादिभ्यः समुत्थिताः ॥
रागा बहुविधाः प्रोक्ता मुनिभिर्भरतादिभिः ॥ ३ ॥
ते हि मेलोद्भवा रागास्तेषु युक्तिपुरःसरम् ॥
निरूप्यंते मतंगादिऋषिप्रोक्तप्रकारतः ॥ ४ ॥
योयं ध्वनिविशेषः स्यात् स्वरवर्णविभूषितः ॥
रंजको जनचित्तानां स रागः कथ्यते बुधैः ॥ ५ ॥
स्वरवर्णविशिष्टेन ध्वनिभेदेन वा जनः ॥
रज्यते येन कथितः स रागः संमतः सताम् ॥ ६ ॥
अश्वकर्णादिवद्रूढो यौगिको वाऽपि मंथवत् ॥
योगरूढश्चवा रागो ज्ञेयः पंकजशब्दवत् ॥ ७ ॥
तेष्वनेकविधेष्वेव ग्रामरागादयः पुनः ॥
रागा अंतरभाषांता मार्गरागाः प्रकीर्तिताः ॥ ८ ॥
अतो गंधर्वलोकेषु प्रयोज्यास्ते व्यवस्थिताः ॥
रागांगाद्यास्तु चत्वारः प्रसिद्धा देशसंज्ञिताः ॥ ९ ॥
रागांगादिनिरुक्तिश्च मतंगेनैव दर्शिता ॥
ग्रामोत्थानां तु रागाणां छायामात्रं भजंति हि ॥ १० ॥
गीतज्ञैः कथिताः सर्वे रागांगास्तेन हेतुना ॥
भाषाच्छायाश्रिता ये च जायंते सदृशाः किल ॥ ११ ॥

भाषांगास्तेन कथ्यंते गायकैः सौतिकादिभिः ॥
करुणोत्साहशोकादिप्रबला या क्रिया ततः ॥ १२ ॥
जायंते च ततो नाम क्रियांगास्तेन कारणात् ॥
रागच्छायानुकारित्वादुपांगमिति कथ्यते ॥ १३ ॥
तत्र प्रसिद्धिविधुरांस्त्यक्त्वा रागांस्तु कांश्चन ॥
सर्वत्र लक्ष्यमार्गेऽत्र संप्रति प्रचरंति ये ॥ १४ ॥
त एव संगृहीतव्या रागा इति विनिश्चयः ॥
त्रिषु ग्रामेषु गांधारग्रामः स्वर्गे प्रकीर्तितः ॥ १५ ॥
महीतले तु द्वौ ग्रामौ स्यात् षड्ग्राम आदिमः ॥
द्वितीयो मध्यमग्रामो नत्वेतल्लक्ष्म लक्षितम् ॥ १६ ॥
लक्ष्ये तु दृश्यते क्कापीत्यस्यासत्प्रायता मता ॥
अतोऽत्र मध्यमग्रामजन्यरागेषु पंचमः ॥ १७ ॥
स्वोपांत्यश्रुतिसंस्थः सन्नैष लक्ष्येषु दृश्यते ॥
ततः स्युरखिला रागाः षड्ग्रामसमुद्भवाः ॥ १८ ॥
तदुक्तं मंत्रिरामेण स्वरमेलकलानिधौ ॥
देशीरागाश्च सकलाः षड्ग्रामसमुद्भवाः ॥ १९ ॥
ग्रहांशतारमंद्रादिषाडवौडुवपूर्णताः ॥
देशीत्वात्सर्वरागेषु भवंति न भवंति च ॥ २० ॥
प्रकाशयत्येवमेव चतुर्दंडिप्रकाशिका ॥
ग्रामेष्वेतेषु गांधारग्रामो नास्ति महीतले ॥ २१ ॥
स्वर्गलोके वर्ततेऽसौ सर्वेषामेव संमतम् ॥
अस्माभिर्मध्यमग्रामोऽप्यसत्प्राय इतीर्यते ॥ २२ ॥
तथाहि मध्यमग्रामे त्रिश्रुतिः पंचमः खलु ॥
वराळीमध्यमो जातः स पुनर्लक्ष्यमार्गतः ॥ २३ ॥
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ॥
रागेषु दृश्यते नैव वराळीमध्यमस्ततः ॥ २४ ॥

अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥
एक एव ततः षड्ज्ग्राम इत्यवधार्यते ॥ २५ ॥
षड्ज्ग्रामोद्भवा रागा इत्यनेन निरूपितम् ॥
तदुक्तं हि विठ्ठलीये ग्रामैकत्वसमर्थनम् ॥ २६ ॥
स्वराणां निचयो ग्रामो मूर्छनादिसमाश्रयः ॥
भरतेनोदिते शास्त्रे ग्रामौ द्वौ षड्ज्मध्यमौ ॥ २७ ॥
षड्ज्ग्रामः पंचमे तु सप्तदश्यां श्रुतौ स्थिते ॥
स्वरेऽस्मिन् पंचमे किंतु षोडशीं श्रुतिमाश्रिते ॥ २८ ॥
तदैव मध्यमग्रामः सोऽत्र रागे न दृश्यते ॥
षड्ज्ग्रामाश्रितान् रागान् सर्वे गायंति गायकाः ॥
तस्मान्मुख्यतमः षड्ज्ग्राम एव न मध्यमः ॥ २९ ॥
गानादौ गृह्यते येन स्वरेण तुलितो ध्वनिः ॥
स षड्ज्ः श्रुतिशब्देन लोक उद्घुष्यते जनैः ॥ ३० ॥
स्वरो धर्तव्य इत्युक्ते निखिलोत्तरगायनैः ॥
ध्रियते यः स्वरः स स्यात् षड्ज् एव न चापरः ॥ ३१ ॥
तादृक् षड्ज्प्रधानत्वाद्ग्रामोऽयं हि प्रशस्यते ॥
स्वरमेलोद्भवा रागाः कथ्यंते लक्ष्यवेदिभिः ॥ ३२ ॥
कथं षड्ज्ग्रामजन्या रागा इति भवन्मतम् ॥
इति चेदुच्यते षड्ज्ग्रामेणैव समार्थकः ॥ ३३ ॥
घटकुंभादिवन्मेलशब्दो लोके प्रदृश्यते ॥
तस्मात्कश्चित्स्वरग्रामः स्वरमेल इतीर्यते ॥ ३४ ॥
षड्ज्प्रधानको ग्रामः षड्ज्ग्रामः प्रकीर्तितः ॥
व्युत्पन्ना ये मतंगाद्यै रागास्ते दशलक्षणाः ॥ ३५ ॥
भवंति तल्लक्षणानि व्याख्यातानि च तैर्यथा ॥
तथैव तानि लिख्यंते यथावदनुपूर्वशः ॥ ३६ ॥
ग्रहांशतारमंद्राश्च न्यासापन्यासकौ तथा ॥
अपि संन्यासविन्यासौ बहुत्वं चाल्पता यथा ॥ ३७ ॥

लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ॥
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ॥ ३८ ॥
येनादौ गीयते गीते स्वरेण स भवेद्ग्रहः ॥
बहुशो गीयते येन स्वरेणांशः स कथ्यते ॥ ३९ ॥
अंशः स्वरोऽप्यसावेव जीवस्वर इति स्मृतः ॥
नीचैः स्वरेण यद्गानं स मंद्रस्वर उच्यते ॥ ४० ॥
उच्चैः स्वरेण यद्गानं स तारस्वर उच्यते ॥
न्यासस्वरः स कथितो येन गीतं समाप्यते ॥ ४१ ॥
अवांतरसमाप्तिं यो रागस्य वितनोति सः ॥
अपन्यासः स स्मृतोऽन्यस्त्वात्यंतिकसमाप्तिकृत्॥४२॥
इति भेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ॥
संन्यासो नाम गीताद्यखंडस्यैव समाप्तिकृत् ॥ ४३ ॥
गीतखंडाद्यावयवस्यांते तिष्ठति स स्वरः ॥
विन्यास एतौ संन्यासविन्यासौ भरतादिभिः ॥ ४४ ॥
अंतर्भूतावपन्यासस्वर एवेति कीर्तितम् ॥
अलंघनं तदभ्यासो बहुत्वं द्विविधं मतम् ॥ ४५ ॥
स्वरस्यास्पर्शनं यत्तल्लंघनं परिकीर्तितम् ॥
साकल्येन स्वरस्पर्शस्त्वलंघनमिति स्मृतम् ॥ ४६ ॥
यदेकस्य स्वरस्यैव नैरंतर्येण वाथवा ॥
व्यवधानेन स्याद्भूयोभूयोऽप्युच्चारणं हि तत् ॥ ४७ ॥
अभ्यास इति शंसंति बहुत्वं द्विविधं ततः ॥
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लंघनात् ॥ ४८ ॥
पूर्वोक्ताभ्यासराहित्यमनभ्यासः प्रकीर्तितः ॥
पूर्वोक्तालंघनाभावो लंघनं परिकीर्तितम् ॥ ४९ ॥
लक्षणानि दशाप्येवं लक्षितानीह प्रस्फुटम् ॥
प्रत्येकमथ रागाणां मेलनादि निरूप्यते ॥ ५० ॥

रागाः सम्यक् निरूप्यंते ह्युदाहरणपूर्वकम् ॥
मेलज्ञानं विना मेलजन्यं ज्ञातुं न शक्यते ॥ ५१ ॥
तस्मात्तन्मेलबोधार्थं तत्स्वरूपं निरूप्यते ॥
षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ॥ ५२ ॥
ऋषभाख्यातकाश्चापि गांधाराख्यातकाश्चते ॥
आद्यस्तत्र न गांधारश्चतुर्थ ऋषभो न हि ॥ ५३ ॥
ऋषभावपि गांधारौ द्वितीयकतृतीयकौ ॥
प्रथमादित्रयं ह्यत्र भवेदृषभसंज्ञकम् ॥
द्वितीयादित्रयं चात्र गांधारसंज्ञितं भवेत् ॥ ५४ ॥
षड्जस्वरस्य पुरतश्चत्वारः स्युः स्वरा यथा ॥
पंचमस्यापि पुरतश्चत्वारः स्युः स्वरास्तथा ॥ ५५ ॥
धैवताद्या निषादाद्याः प्रथमाद्यास्तु धैवताः ॥
द्वितीयाद्या निषादाः स्युर्मुखार्यादिषु तु त्रिषु ॥ ५६ ॥
रागेष्वथ धनी शुद्धौ द्वितीयौ तु धनीरितौ ॥
पंचश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ॥ ५७ ॥
तृतीयौ षट्श्रुतिस्थो धः काकल्याख्यनिषादकः ॥
त्रिष्वेषु युगलेष्वन्यतरत्संग्राह्यमीरितम् ॥ ५८ ॥
स्वरेषु द्वादशस्वेषु तत्तद्रागोपयोगतः ॥
तत्तत्स्वरसमूहात्मा मेल इत्येवमीरितः ॥ ५९ ॥
विशेषसंज्ञया सम्यक् संज्ञिता ये स्वराः पुरा ॥
त एतेऽप्यत्र विज्ञेयास्तद्विशेषपुरःसरम् ॥ ६० ॥
स्वराः स्युः श्रुतिनिष्पन्नाः श्रुतिन्यूनाधिकत्वतः ॥
एते बहुविधाः शुद्धा विकृता व्यावहारिकाः ॥ ६१ ॥
इति त्रिधा निगद्यंते, तान् ब्रूमोऽत्र विशेषतः ॥
षड्जाद्याः शुद्धशब्दाद्याः स्वराः शुद्धा इतीरिताः ॥६२॥
शुद्धषड्जस्तथाशुद्धर्षभ इत्यादिनामभिः ॥
अत्रैते व्यवहर्तव्या विकृतास्तत्तदाख्यया ॥ ६३ ॥

ताभिस्तेऽत्र निरूप्यंते क्रमशो विकृताः स्वराः ॥
साधारणाख्यगांधारोंऽतरगांधार एव च ॥ ६४ ॥
पंचमोपांत्यश्रुतौ विकृतपंचममध्यमः ॥
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥ ६५ ॥
पंचैते विकृताः शुद्धैः स्वरैर्द्वादश कीर्तिताः ॥
विहाय स्वस्वसंज्ञा ये स्वरा अन्योन्यसंज्ञकाः ॥ ६६ ॥
तेषां नामांतराण्यत्र विहितानीह तद्यथा ॥
शुद्धगांधार एवायं पंचश्रुत्यृषभाह्वयः ॥ ६७ ॥
साधारणाख्यगांधारः षट्श्रुत्यृषभसंज्ञितः ॥
तथा शुद्धनिषादोऽपि स्यात्पंचश्रुतिधैवतः ॥ ६८ ॥
स्यात्कैशिकनिषादोऽपि तथा षट्श्रुतिधैवतः ॥
लक्ष्यानुसारतस्त्वेतल्लौकिकं सुखबोधकम् ॥ ६९ ॥
तदेतत्स्वरसंघातरूपा मेला निरूपिताः ॥
अथ मेलोद्भवा रागा निरूप्यंते यथाक्रमम् ॥ ७० ॥
भेदा बहुविधास्तत्र द्विसप्ततिरिति स्फुटम् ॥
निरूपयति तद्भेदांश्चतुर्दंडिप्रकाशिका ॥ ७१ ॥
एकोनविंशतिस्तत्र तेनैव समुदाहृताः ॥
मेलाः प्रस्तारतो नेया द्विसप्ततिरुपायतः ॥ ७२ ॥
इत्येवं विविधा मेलाः प्रस्तारपरिभाषया ॥
उन्नीतास्तेन तत्रेति त्यक्त्वा तानप्रसिद्धकान् ॥ ७३ ॥
तत्तद्देशप्रसिद्धेन रागनाम्ना विशेषतः ॥
प्रसिद्धाः कतिचिन्मेला उद्दिश्यंते मया क्रमात् ॥
अत्र सर्वेषु रागेषु श्रीरागश्चोत्तमोत्तमः ॥ ७४ ॥

तदुक्तं सोमेश्वरमते ॥

शिवशक्तिसमायोगाद्रागाणां संभवो भवेत् ॥
पंचास्यात् पंचरागाः स्युः षष्ठस्तु गिरिजामुखात्॥७५॥

सद्योवक्त्रात्तु श्रीरागो वामदेवाद्वसंतकः ॥
अघोराद्भैरवो जातस्तत्पुरुषात्तु पंचमः ॥ ७६ ॥
ईशानाख्यान्मेघरागो नाट्यारंभे शिवादभूत् ॥
गिरिजाया मुखाल्लास्ये नटनारायणोऽभवत् ॥ ७७ ॥

अथ मेलाः ॥

तत्र श्रीरागमेलोऽथ शुद्धनाटयाश्च मेलकः ॥
ततो मालवगौडस्य वेलावल्याश्च मेलकः ॥ ७८ ॥
वराळयाख्यश्च रामक्रीरागमेलस्ततःपरम् ॥
शंकराभरणाह्वोऽपि मेलः स्यात्तदनंतरम् ॥ ७९ ॥
कांबोजीरागमेलः स्याद्भैरव्या मेलकस्तथा ॥
मुखारिमेलको वेगवाहिन्याश्चैव मेलकः ॥ ८० ॥
सिंधुरामक्रियामेलो हेजिज्जीमेलकस्ततः ॥
मेलः सामवराळयाख्यरागस्यातःपरं ततः ॥ ८१ ॥
वसंतभैरवीमेलो भिन्नषड्जस्य मेलकः ॥
देशाक्षीरागमेलश्च छायानाटस्य मेलकः ॥ ८२ ॥
सारंगरागमेलश्च तोडीमेलस्ततःपरम् ॥
कल्याणीरागमेलश्चेत्येकविंशतिरीरिताः ॥ ८३ ॥

अथ मेलजन्यरागाः ॥

मेलोद्भवेषु रागेषु श्रीरागोऽत्र चिरंतनैः ॥
ग्रामराग इति प्रोक्तो रागांगमिति कैश्चन ॥ ८४ ॥
श्रीरागो रागराजोऽयं सर्वसंपत्प्रदायकः ॥
इत्युच्यते तत्र लक्ष्म तुलजेंद्रेण धीमता ॥ ८५ ॥
श्रीरागः परिपूर्णः सग्रहांशन्याससंयुतः ॥
गेयः सायाह्नसमये ह्यथ तानविवर्जितः ॥ ८६ ॥
शुद्धाः स्युः समपाः पंचश्रुती ऋषभधैवतौ ॥
साधारणाख्यगांधारः कैशिक्याख्यनिषादकः ॥ ८७ ॥

एतैः सप्तस्वरैर्युक्तो यो मेलस्तत्र चादिमः ॥
श्रीरागस्तन्मेलजातानुद्दिशामीह कांश्चन ॥ ८८ ॥
श्रीरागरागराजोऽथ रागः कंनडगौळकः ॥
देवगांधारकाख्यश्च तथा सालगभैरवी ॥ ८९ ॥
तथा स्याच्छुद्धदेशी च स्यान्माधवमनोहरी ॥
मध्यमग्रामरागश्च सैंधवी काफिकाह्वयः ॥ ९० ॥
हुसेनीति च संपूर्णा अत्र रागा उदाहृताः ॥
श्रीरंजनी मालवश्रीस्तथा देवमनोहरी ॥ ९१ ॥
जयंतसेनसंज्ञश्च मणिरंगश्च षाडवाः ॥
मध्यमादिस्तथा शुद्धधन्यासीत्यौडुवौ मतौ ॥ ९२ ॥
षाडवौडुवसंपूर्णा रागा अत्र समीरिताः ॥
तुळजेंद्रेण संगीतसारामृत इति स्फुटम् ॥ ९३ ॥

**टीप**— हा संगीत सारामृत ग्रंथ महाराज तुलाजीराव भोंसले जे तंजावरच्या गादीवर होते, त्यांनीं लिहिला, असें तेथें म्हटलें आहे. कदाचित् त्यांच्या पदरच्या कोणी पंडितानें लिहून त्यांच्या नांवानें तो प्रसिद्ध केला असेल. हे महाराज शिवाजी महाराजांच्याच वंशांतले एक पुरुष होते, असें दिसतें, कारण ग्रंथाच्या प्रारंभींच्या वंशवर्णनांत मालोजी, शहाजी, जीजाबाई, संभाजी, शिवाजी, व्यंकोजी वगैरे सारीं नांवें आहेत. या नांवांवरून या ग्रंथाचा काल तर स्पष्टच आहे. या ग्रंथांतली संगीतपद्धति दक्षिणेकडचीच आहे, म्हणजे ती व्यंकटेश्वर पंडिताची आहे. या ग्रंथांत संगीतोपयोगी स्वर आपले हिंदुस्थानी पद्धतीचेच बारा आहेत. त्यांचीं नांवें मात्र दक्षिण पद्धतीला अनुसरून आहेत. रागविबोध, स्वरमेलकलानिधि, चतुर्दंडिप्रकाशिका, हे ग्रंथ या ग्रंथाच्या अगोदरचे आहेत, व ते सारे या ग्रंथकाराला माहीत होते. आपल्या हिंदुस्थानी पद्धतींत, दुपारीं बारा वाजल्यापासून रात्रीं बारावाजेपर्यंतचे ते पूर्वांगवादी पूर्वराग, व रात्रीं बारावाजल्यापासून पुनः दुपारपर्यंतचे ते उत्तरांगवादी उत्तर राग, अशी जी सोयीची रचना पंडितांनीं मानिली आहे, तशी या दक्षिण पद्धतीच्या कोणत्याच ग्रंथांत दिसत नाहीं, ही एक ध्यानांत ठेवण्याजोगी गोष्ट आहे. या हिंदुस्थानी रचनेचा संबंध ज्या वेळीं दुपारपासून दुपारपर्यंत एक संपूर्ण दिवस मानीत असत, त्या वेळेशीं असेल. निदान आपल्या हिंदुस्थानी संगीताचा एकंदर कल तशा धोरणावर मार्मिकांस दिसून

येतो, हें खरें आहे. दक्षिणेकडे वादी संवादी स्वरांच्या महत्वाकडे तितकें लक्ष्य दिलेले दिसण्यांत येत नाहीं. सारामृतांत रागोपयोगी जे बारा स्वर मानिले आहेत, ते असे आहेत. १ शुद्धषड्ज २ शुद्धऋषभ ३ पंचश्रुतिऋषभ अथवा शुद्धगांधार ४ षट्श्रुतिऋषभ अथवा साधारणगांधार ५ अंतरगांधार ६ शुद्धमध्यम ७ विकृतपंचममध्यम ८ शुद्धपंचम ९ शुद्धधैवत १० पंचश्रुतिधैवत अथवा शुद्धनिषाद ११ षट्श्रुतिधैवत अथवा कैशिकनिषाद १२ काकलीनिषाद. या बारा स्वरांशीं तुल्य हिंदुस्थानी पद्धतीचे स्वर क्रमानें असे समजावे. १ शुद्धषड्ज २ कोमलऋषभ ३ तीव्र अथवा शुद्धऋषभ ४ कोमलगांधार ५ तीव्रगांधार अथवा शुद्धगांधार ६ शुद्धमध्यम ७ तीव्रमध्यम ८ पंचम ९ कोमलधैवत १० तीव्र अथवा शुद्धधैवत ११ कोमलनिषाद १२ तीव्रनिषाद अथवा शुद्धनिषाद. या खुलाशानें दक्षिणेकडच्या बहुतेक ग्रंथांच्या रागांचा खुलासा करतां येईल. सारामृतांत श्रुति, मूर्छना, ग्राम, तान जाति वगैरे भाग आहेत, परंतु ते ग्रंथकर्त्यानें संगीत रत्नाकरांतून उतरून घेतले असल्यामुळें व रत्नाकर ग्रंथ आतां छापून प्रसिद्ध झाला असल्यामुळें, ते येथें उतरून घेतले नाहींत. त्या भागांचा खुलासा ग्रंथकारास मुळींच झाला नव्हता, असें स्पष्ट दिसतें. सारामृतकारानें मेलसंख्या एकंदर ७२ कबूल करून प्रचारांतले प्रसिद्ध २१ मेल सांगितले आहेत व त्यांतून निघणाऱ्या सुमारें ११० जन्य रागांचें वर्णन केलें आहे. या ग्रंथांत रत्नाकरांतलेही कांहीं कांहीं राग आले आहेत, व त्यांचे मेल वगैरे स्पष्ट आहेत, परंतु रत्नाकरवर्णनांशीं एकवाक्यता करण्याचा प्रयत्न ग्रंथकारानें न केल्यामुळें त्याचीं वर्णनें निराधार राहतात. ग्रंथकारानें प्रत्येक राग सांगून त्याचे पुढें लहान उदाहरणेंही दिलीं आहेत, तीं आम्हीं येथें घेतलीं नाहींत. प्रचारांत मध्यमग्राम मुळींच नाहीं वगैरे गोष्टी ग्रंथकारानें जोरानें सांगितल्या आहेत, तो भाग चतुर्दंडिप्रकाशिकेच्या आधारानें आहे. मध्यमग्रामांतला पंचमस्वर तो प्रचारांतला "तीव्रमध्यम" असें या पंडिताचें व व्यंकटेश्वराचें स्पष्ट मत होतें, हें ध्यानांत घेण्याजोगें आहे. संगीतरत्नाकराची रचना तेराव्या शतकांतली ( असें आतां मानितात ) असून ती स्वरमेलकलानिधि, रागविबोध, चतुर्दंडिप्रकाशिका, सारामृत, या सर्वांस शें दोनशें वर्षांत दुर्बोध कां झाली, हें ऐतिहासिक गूढ आहे. कल्लिनाथ पंडिताला देखील रत्नाकराच्या जाति, ग्राम, मूर्छना, राग प्रकरणांचा स्पष्ट खुलासा झाला होता, असा पुरावा अझून प्रसिद्ध झाला नाहीं. खुद्द शार्ङ्गदेवाच्या वेळीं कोणतें संगीत होतें, त्याला मार्ग संगीत कसें आलें, त्यानें आपला ग्रंथ ग्राममूर्छनाजातींनीं कां लिहिला, त्याच्या तालनृत्यवाद्य वगैरे अध्यायांतले शेंकडों श्लोक "दत्तिलकोहलीयम्" या ग्रंथांत त्याच शब्दांनीं व त्याच क्रमानें कसे आले, वगैरे मनोरंजक प्रश्न चौकस विद्यार्थ्यांना विचार करण्याजोगे आहेत. परंतु तें असो. आपण सारामृतांतील मेल व जन्यराग आतां क्रमानें घेऊं.

श्रीरागमेलसंजातो रागः कंनडगौळकः ॥
निन्यासांशग्रहोपेतः सप्तस्वरसमन्वितः ॥
वक्रस्वरगतिश्लिष्टोऽसावारोहावरोहयोः ॥
गेयोऽह्नः पश्चिमे याम उत्कलानामतिप्रियः ॥
उपांगमेनं शंसंति संगीतागमपारगाः ॥

इति कंनडगौळः ॥

श्रीरागमेलजः पूर्णो देवगांधारकाभिधः ॥
गातव्यः प्रातरेवैष षड्जन्यासग्रहांशकः ॥
आरोहे रिधवर्ज्यो वाऽऽरोहे रिधसमन्वितः ॥

इति देवगांधारः ॥

श्रीरागमेलसंजाता पूर्णा सालगभैरवी ॥
षड्जन्यासग्रहांशाऽसौ यामे गेया तुरीयके ॥
इति श्रीतुलजेंद्रेण कथिता सर्वसंमता ॥

इति सालगभैरवी ॥

श्रीरागमेलजातेयं माधवाद्यमनोहरी ॥
पूर्णा गेया सायमेषा षड्जन्यासग्रहांशिका ॥

आरोहे धैवतलंघनं; अवरोहणे पंचमलंघनम् ।

इति माधवमनोहरी ॥

शुद्धदेशीराग एष जातः श्रीरागमेलतः ॥
संपूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ॥

अत्राप्यारोहे गांधारलंघनमिति हेतोः निसरिगरीतिगांधारांतक्रमे गांधार आगच्छति तदुपरिगमने नागच्छति ।

इति शुद्धदेशी ॥

मध्यमग्रामरागः श्रीरागमेलसमुद्भवः ॥
संपूर्णः सग्रहन्यासांशस्त्वयं परिकीर्तितः ॥

इति मध्यमग्रामरागः ॥

श्रीरागमेलसंभूतः सैंधवीराग ईरितः ॥

संग्रामकर्मणि जयप्रदः सायं प्रगीयते ॥
संपूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ॥
इति सैंधवी ॥
काफीरागस्तु संपूर्णः षड्जन्यासग्रहांशकः ॥
श्रीरागमेलसंजातः सायं ज्ञेयः शुभप्रदः ॥
इति काफीरागः ॥
श्रीरागमेलजः पूर्णो हुसेनीराग ईरितः ॥
षड्जग्रहांशकन्यासः सायंकाले प्रगीयते ॥
इति हुसेनी ॥
श्रीरंजनीसमाख्योऽयं रागः श्रीरागमेलजः ॥
षाडवः स तु विज्ञेयः पंचमस्वरवर्जनात् ॥
षड्जग्रहांशकन्यासः सायंगेयः प्रकीर्तितः ॥
इति श्रीरंजनीरागः ॥
श्रीरागमेलसंजाता षड्जन्यासग्रहांशिका ॥
रिवर्जिता मालवश्रीः षाडवा मंगलप्रदा ॥
रागांगमेनां शंसंति सा गेया सर्वदा बुधैः ॥
इति मालवश्रीः ॥
श्रीरागमेलसंभूता सेयं देवमनोहरी ॥
गवर्जनात् षाडवा स्यात् षड्जन्यासग्रहांशिका ॥
अवरोहे धैवतलंघनम् ।
इति देवमनोहरी ॥
जयंतसेनको रागो जातः श्रीरागमेलतः ॥
रिवर्जितः षाडवोऽयं षड्जन्यासग्रहांशकः ॥
इति जयंतसेनः ॥
श्रीरागमेलसंजातो मणिरंगः प्रकीर्तितः ॥
सग्रहांशन्यासयुक्तः षाडवः स्याद्धवर्जनात् ॥

इति मणिरंगः ॥

मध्यमादिस्तु रागांगं जातः श्रीरागमेलतः ॥
गधलोपादौडुवोऽयं सायंकाले तु गीयते ॥
रक्तिरेतस्य रागस्य मुरल्यां दृश्यतेऽधिका ॥

इति मध्यमादिः ॥

धनाश्रीरागो रागांगं, जातः श्रीरागमेलतः ॥
रिधलोपादौडुवोऽयं प्रातर्गेयः शुभप्रदः ॥

इति धनाश्रीरागः ॥

शुद्धाः स्वराः स्युः समपाः षट्श्रुत्यृषभधैवतौ ॥
अंतराख्यातगांधारः काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः शुद्धनाट्याश्च मेलकः ॥
अस्मिन्मेले शुद्धनाटीमुख्या रागाः प्रकीर्तिताः ॥
नाटी भाषांगं संपूर्णा षड्जन्यासग्रहांशिका ॥
सायंकाले तु गातव्याऽवरोहे गधवर्जिता ॥

इति शुद्धनाटी ॥

अथ रागोदयरविचंद्रिका नाटमेलजा ॥
टक्कभाषेति विज्ञेया संपूर्णा सग्रहांशिका ॥
धगवर्ज्यौडुवा सेयं सायंगेया तु नाटवत् ॥

इत्युदयरविचंद्रिका ॥

शुद्धाः स्युः समपाः शुद्धऋषभः शुद्धधैवतः ॥
अंतराख्यातगांधारः काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तो यो मेलः परिकीर्तितः ॥
सोऽयंमालवगौळः स्यात्संमतो गानवेदिनाम् ॥
अस्मिन्मेले तु ये रागा जायंते तानथ ब्रुवे ॥
आद्यो मालवगौळः स्यात् ततः सालुगनाटिका ॥
रागोयमार्द्रदेशाख्यः छायागौळाह्वयस्तथा ॥
टक्को गुर्जरिका गुंडक्रिया च फलमंजरी ॥

नादरामक्रिसौराष्ट्र्यौ तथा मंगलकैशिकः ॥ लक्षणं नोत्तम
मेचबौळिर्मागधी च तथा गौरीमनोहरी ॥
मरुवाख्यो गौळिपंतुः सावेरी पूर्विका तथा ॥
संपूर्णरागा एते स्युः षाडवाः स्युरनंतरम् ॥
गौळश्च ललिता बौळिः पाडिः कंनडपूर्वकः ॥ < आ.
बंगालोऽयं मल्हरिः पूर्णपंचमसंज्ञकः ॥
शुद्धसावेरिका मेघरंज्याख्या रेवगुप्तिका ॥ ४ औ
मालवीति चतस्रः स्युरौडुवाः परिकीर्तिताः ॥
इति माळवगौळः ॥ 15
सारंगनाटी संपूर्णा षड्न्यासग्रहांशिका ॥
मेले मालवगौळे स्याज्जाता सायं प्रगीयते ॥
इति सारंगनाटी ॥
मेलान्मालवगौळीयादार्द्रदेशी समुत्थिता ॥
संपूर्णा सग्रहन्यासा प्रातर्गेया प्रकीर्तिता ॥
इत्यार्द्रदेशी ॥
मेलान्मालवगौळस्य छायागौळः समुत्थितः ॥
पूर्णो निषादग्रहोऽयं सर्वकालेषु गीयते ॥
इति छायागौळः ॥
टक्को मालवगौळीयमेलोद्भूतोऽल्पपंचमः ॥
पूर्णः षड्ग्रहादिश्च गेयोऽह्नः पश्चिमे बुधैः ॥
इति टक्कः ॥
मेलान्मालवगौळीयाज्जाता पूर्णा तु गुर्जरी ॥
प्रातःकाले तु सा गेया रिग्रहा परिकीर्तिता ॥
इति गुर्जरी ॥
मेलान्मालवगौळस्योद्भूता गुंडक्रिया प्रगे ॥
गेया संपूर्णतायुक्ता सन्यासांशग्रहा मता ॥

इति गुंडक्रिया ॥
मेलान्मालवगौळीयाज्जातेयं फलमंजरी ॥
सन्यासांशग्रहा पूर्णा सायंकाले प्रगीयते ॥
इति फलमंजरी ॥
मेलान्मालवगौळीयान्नादरामक्रियाभिधः ॥
सायाह्ने गीयते पूर्णः षड्डन्यासग्रहांशकः ॥
इति नादरामक्रियारागः ॥
मेलो मालवगौळस्य स्यात्सौराष्ट्र्याः स एव हि ॥
षड्जन्यासग्रहांशेयं सर्वकालेषु गीयते ॥
इति सौराष्ट्रीः ॥
मेलो मालवगौळीयो मेचबौलेरयं पुनः ॥
संपूर्णः सग्रहादिश्च सदा गेयः शुभावहः ॥
इति मेचबौलिः ॥
मेलो मालवगौळीयो मागध्याः पंचमस्य च ॥
भाषेयं सग्रहन्यासा पूर्णा गेया सदा त्वियम् ॥
इति मागधी ॥
मेले मालवगौळस्य जाता गौरीमनोहरी ॥
संपूर्णा सग्रहादिश्च सायंगेया शुभप्रदा ॥
इति गौरीमनोहरी ॥
मेलान्मालवगौळीयाज्जातो मारुवसंज्ञकः ॥
पूर्णः षड्जग्रहादिश्च सायंगेयः प्रकीर्तितः ॥
इति मारुवः ॥
जाता मालवगौळीयमेलात्सावेरिकाभिधा ॥
पूर्णा प्रातः प्रगातव्या षड्जन्याससग्रहांशिका ॥
इति सावेरी ॥
मेलान्मालवगौळीयादुत्पन्नो गौळिपंतुकः ॥

बोद्दभाषा सग्रहांशः पूर्णः सायं प्रगीयते ॥
आरोहे गधलंघनम् । अवरोहे स्वरगतिरवक्रा ।
इति गौळीपंतुः ॥
मेलान्मालवगौळीयाज्जातोऽयं पूर्विरागकः ॥
तृतीयप्रहरे गेयः पूर्णः षड्जग्रहांशकः ॥
इति पूर्वीरागः ॥
मेलान्मालवगौळीयादुत्पन्नोऽयं विभांशुकः ॥
महीनः षाडवः सांशग्रहः प्रातः प्रगीयते ॥
इति विभासरागः ॥
गौळो मालवगौळीयमेलजो धैवतोज्झितः ॥
षाडवो निग्रहो रागांगोऽयं शश्वत्प्रगीयते ॥
इति गौळः ॥
मेलान्मालवगौळीयाद्बंगालः कंनडादिकः ॥
जातो भाषांगो निवर्जः प्रातर्गेयश्च गग्रहः ॥
आरोहे गांधारलंघनम् । अवरोहे क्रमवक्रतयागांधारः ॥
इति कंनडबंगालः ॥
मेलान्मालवगौळस्य जातोपांगं मवर्जनात् ॥
षाडवा बहुली ज्ञेया सायंकाले तु गग्रहा ॥
इति बहुली ॥
मेलान्मालवगौळीयात् पाडिरागः समुत्थितः ॥
गलोपात् षाडवः सायंगेयः षड्ग्रहादिकः ॥
इति पाडिरागः ॥
मेलान्मालवगौळीयाज्जाता मल्हरी स्मृता ॥
निलोपात् षाडवा प्रातर्गातव्या धैवतग्रहा ॥
इति मल्हरिः ॥
पहीना षाडवा टक्कभाषेयं ललिता प्रगे ॥
गेया मालवगौळीयान्मेलाज्जाता च सग्रहा ॥



} not mentioned in the dic

इति ललिता ॥

पूर्णपंचमरागोऽयं जातो मालवगौळतः ॥
निवर्जनात् षाडवोऽयं षड्जन्यासग्रहांशकः ॥

इति पूर्णपंचमः ॥

मेलान्मालवगौळीयाच्छुद्धसावेरिकाभिधा ॥
गनिलोपादौडुवा सग्रहा गेया प्रगे बुधैः ॥

इति शुद्धसावेरी ॥

मेलान्मालवगौळीयान्मेघरंजः पधोज्झितः ॥
औडुवः पर्जन्यकाले गेयः षड्जग्रहादिकः ॥

इति मेघरंजनी ॥

मेलान्मालवगौळीयादुद्भूतो रेवगुप्तकः ॥
मनिवर्ज्य औडुवः सन्यासः सायं प्रगीयते ॥

इति रेवगुप्तकः ॥

मेलान्मालवगौळीयाट्टक्कभाषा तु मालवी ॥
गधवर्ज्यौडुवा सायं गेया षड्जग्रहांशिका ॥

इति मालवी ॥

शुद्धाः स्युः समपाः पंचश्रुती ऋषभधैवतौ ॥
साधारणाख्यगांधारः काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तो वेलावल्याश्च मेलकः ॥
वेलावली तु भाषांगा पूर्णेयं हि स्वमेलजा ॥
पन्यासांशग्रहा प्रातर्गेया संगीतकोविदैः ॥

इति वेलावली ॥ 23

शुद्धाः स्युः सरिगाः शुद्धपंचमः शुद्धधैवतः ॥
काकल्याख्यनिषादो विकृतपंचममध्यमः ॥
एतैः सप्तस्वरैर्युक्तो वराळीमेल ईरितः ॥
वराळी पूर्णतायुक्ता सग्रहांशा स्वमेलजा ॥
भिन्नपंचमभाषेयं सर्वयामेषु गीयते ॥

इति वराळी ॥ 39

शुद्धाः सपरिधाः स्युर्विकृतपंचममध्यमः ॥
गांधारोंऽतरसंज्ञश्च काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः शुद्धरामक्रिमेलकः ॥
अत्र रागाः शुद्धरामक्रियाद्याः संभवंति हि ॥
रामक्रिरागः संपूर्णः क्रियांगमिति कीर्तितः ॥
षड्ग्रहांशकन्यासः सायं सोऽयं प्रगीयते ॥

इति शुद्धरामक्रिया ॥ 51

रामक्रियामेलजोऽयं संपूर्णो दीपकः स्मृतः ॥
षड्न्यासग्रहांशोऽयं गेयो यामे तुरीयके ॥

इति दीपकः ॥

शंकराभरणो रागः संपूर्णः स्यात् स्वमेलजः ॥
षड्ग्रहांशकन्यासः सायंकाले प्रगीयते ॥
मेलेऽस्य समपाः शुद्धा रिधौ पंचश्रुती निगौ ॥
काकल्यंतरसंज्ञौ च तैः स्वरैः सहितो मतः ॥
अस्मिन्मेले तु ये जाता उद्दिशामीह तान् क्रमात् ॥
शंकराभरणाख्योऽथारभी शुद्धवसंतकः ॥
सरस्वतीमनोहरी पूर्वगौळाभिधस्तथा ॥
नारायणी च नारायण्याद्यदेशाक्षिसंज्ञकः ॥
सामंतनामा कुरंजी तथासौ पूर्णचंद्रिका ॥
सुरसिंधुश्च जुलावुर्बिलहारीतिनामिका ॥
गौडमल्लारकेदारावित्याद्याः परिकीर्तिताः ॥

इति शंकराभरणः ॥ 29

शंकराभरणीयो यो मेलः स्यात्तत्र चारभी ॥
पूर्णा सांशग्रहन्यासा सायंगेया शुभप्रदा ॥

इत्यारभी ॥

शंकराभरणीयाच्च मेलाच्छुद्धवसंतकः ॥

संपूर्णः सग्रहः सांशो रागांगमिति कथ्यते ॥
इति शुद्धवसंतः ॥
शंकराभरणाख्यातरागमेलसमुद्भवा ॥
पूर्णा सांशा निशागेया सरस्वतीमनोहरी ॥
इति सरस्वतीमनोहरी ॥
शंकराभरणीयेऽस्मिन्मेले स्यात्पूर्वगौळकः ॥
संपूर्णः सग्रहांशोऽपि गेयो यामे तुरीयके ॥
इति पूर्वगौळः ॥
शंकराभरणाख्यातरागमेलसमुद्भवा ॥
नारायणी गग्रहांशा संपूर्णा गीयते प्रगे ॥
इति नारायणी ॥
शंकराभरणीये हि मेले स्याद्गग्रहांशिका ॥
नारायण्याद्यदेशाक्षी पूर्णा गेया स्मृता प्रगे ॥
इति नारायणीदेशाक्षी ॥
शंकराभरणाख्यातरागमेलसमुद्भवः ॥
सामंतः सग्रहः सायं गेयः संपूर्णतां गतः ॥
इति सामंतः ॥
शंकराभरणीयो यो मेलस्तत्र कुरंजिका ॥
पूर्णोपांगं सग्रहांशा सायं गेया प्रकीर्तिता ॥
आरोहे गांधारधैवतलंघनम् ।
इति कुरंजी ॥
शंकराभरणीयोऽयं मेलोऽस्मात् पूर्णचंद्रिका ॥
पूर्णेयं सग्रहा सांशा सायं गेया प्रकीर्तिता ॥
इति पूर्णचंद्रिका ॥
शंकराभरणीयोऽसौ मेलोऽस्मिन् सुरसिंधुकः ॥
संपूर्णः सग्रहन्यासः सायं गेयः प्रकीर्तितः ॥

इति सुरसिंधुः ॥

शंकराभरणीयोऽसौ जुलावोमेल ईरितः ॥
संपूर्णोऽयं सग्रहांशः सायमेष प्रगीयते ॥

अस्य प्रयोगो मंद्रपंचमादारभ्य मध्यपंचमपर्यंत एव ।

इति जुलावुः ॥

शंकराभरणीयोऽयं मेलस्तज्जा बिलाहरी ॥
सग्रहांशा च सन्यासा पूर्णा प्रातः प्रगीयते ॥

आरोहे मध्यमलंघनम् ।

इति बिलहरी ॥

गौडमल्लाररागश्च शंकराभरणे मतः ॥
संपूर्णः सग्रहन्यासो वर्षास्वेष प्रगीयते ॥

इति गौडमल्लारः ॥

रागः केदारसंज्ञः शंकराभरणमेलजः ॥
संपूर्णः सग्रहः सांशः सायंकाले प्रगीयते ॥
धवर्जः षाडवः सोऽयमवक्रस्वरसंगतिः ॥

इति केदारः ॥

कांभोजी ककुभस्य स्याद्भाषा पूर्णा च सांशिका ॥
मनिवर्ज्यारोहिणीयं सायं गेया विचक्षणैः ॥
मेलोऽस्याः समपाः शुद्धा अथ पंचश्रुती रिधौ ॥
गांधारोंऽतरसंज्ञश्च कैशिक्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तस्तत्र जातास्त्वमी मताः ॥
कांभोजीनारायणाद्यगौळकेदारगौळकाः ॥
बडहंसस्तथा नागध्वनिश्छायातरंगिणी ॥
मनोहरीशपूर्वा च कांभोज्येदुकुलादिका ॥
कुरंजीनाटपूर्वा च कन्नडः पूर्णतायुताः ॥
दशाथ नटनारायण्यांधाली सामरागकः ॥

मोहन रागो मनोहसंज्ञश्च चत्वारः षाडवा इमे ॥
४ षा. देवक्रियामोहनाद्यकल्याणाख्याविहौडुवौ ॥
२ औ आहत्य षोडशेतीमे कांभोजीरागमेलजाः ॥
इति कांभोजी ॥ २४

कांभोजीमेलसंजातः नारायणाद्यगौळकः ॥
निषादग्रहविन्यासः पूर्णो यामे तुरीयके ॥
इति नारायणगौळः ॥

केदारगौळः संपूर्णः कांभोजीमेलसंभवः ॥
निन्यासांशोपांगमिह गेयो यामे तुरीयके ॥
आरोहे गांधारनिषादलंघनम् ।
इति केदारगौळः ॥

वडहंसः सग्रहांशः कांभोजीमेलसंभवः ॥
संपूर्णः सायमेवैष गेयः संगीनकोविदैः ॥
इति बलहंसः ॥

नागध्वनिस्तु भाषांगं कांभोजीमेलजः स्मृतः ॥
संपूर्णः सग्रहन्यासः सर्वदा गीयते बुधैः ॥
इति नागध्वनिः ॥

छायातरंगिणीरागः कांभोजीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सायाह्ने गेय ईरितः ॥
इति छायातरंगिणी ॥

कांभोजीमेलजा यदुकुलकांभोजिसंज्ञिका ॥
संपूर्णा सग्रहन्यासा सायंगेया प्रकीर्तिता ॥
इति यदुकुलकांभोजी ॥

पूर्णो नाटकुरंज्याख्यः कांभोजीमेलजोत्तमः ॥
सन्यासांशग्रहः सायं गेयः संगीतकोविदैः ॥

इति नाटकुरंजीरागः ॥

कांभोजीमेलसंजातो रागः कंनडसंज्ञकः ॥
संपूर्णः सग्रहन्यासः सायं सोऽयं प्रगीयते ॥

इति कंनडरागः ॥

नटनारायणीरागः कांभोजीमेलसंभवः ॥
निन्यूनः षाडवः षड्ग्रहः सायं प्रगीयते ॥

इति नटनारायणीरागः ॥

कांभोजीमेलसंजातेयमांधाली धवर्जिता ॥
षाडवा सग्रहन्यासा सायंकाले प्रगीयते ॥

इत्यांधालीरागः ॥

कांभोजीमेल उत्पन्नः सामरागो निवर्जितः ॥
षाडवः सग्रहन्यासः सदा गेयः शिवप्रदः ॥

आरोहे गलंघनम् ।

इति सामरागः ॥

रागः कांभोजिमेलोत्थो मनोहाख्यो निवर्जितः ॥ मोहना
षाडवः सग्रहन्यासः सायं गेयोऽतिरक्तिदः ॥

अस्य मध्यमोऽल्पः ।

इति मनोहः ॥ मोहनः

देवक्रिया क्रियांगं स्यात् कांभोजीमेलसंभवा ॥
निलोपादौडुवा सा सग्रहांशा गीयते सदा ॥ षाडवा

इति देवक्रिया ॥

मेले मोहनकल्याणी कांभोज्याः परिकीर्तिता ॥
मनिवर्ज्या ह्यौडुवा सग्रहा सायं प्रगीयते ॥

इति मोहनकल्याणी ॥

शुद्धाः समपधाः पंचश्रुतिकर्षभ एव च ॥
साधारणाख्यगांधारः कैशिक्याख्यनिषादकः ॥

एतैः सप्तस्वरैर्युक्तो भैरवीमेलको भवेत् ॥
अस्मिन्मेले भैरवी चाहीरी घंटारवोऽपि च ॥
इंदुघंटारवो रीतिगौळ आनंदभैरवी ॥
हिंदोलाद्यवसंतश्च तत आभेरिरागकः ॥
धन्यासी नागगांधारी संपूर्णा इति विश्रुताः ॥
औडुवो हिंदोलरागो भैरवीमेलसंभवः ॥
उपांगभैरवीरागो धन्यासः सग्रहोत्तमः ॥
संपूर्णस्वरसंयुक्तः सायंकाले प्रगीयते ॥

इति भैरवी ॥

आहरी टक्कभाषेयं भैरवीमेलसंभवा ॥
संपूर्णा सग्रहन्यासा सायं सेयं प्रगीयते ॥

इति आहरी ॥

भैरवीमेलजो घंटारवो रागांगमीरितः ॥
धन्यासांशग्रहः पूर्णः सर्वदाप्येष गीयते ॥

इति घंटारवः ॥

इंदुघंटारवो रागो भैरवीमेलसंभवः ॥
सन्यासांशग्रहः पूर्णः सर्वयामेषु गीयते ॥

आरोहे धैवतलंघनम् । अवरोहे ऋषभलंघनम् ॥

इतींदुघंटारवः ॥

भैरवीमेलजो रागो रीतिगौळसमाह्वयः ॥
निन्यासांशग्रहः पूर्णः सायमेष प्रगीयते ॥

अवरोहे ऋषभवर्जनम् ।

इति रीतिगौळः ॥

हिंदोलाद्यवसंतोऽयं भैरवीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सर्वदाप्येष गीयते ॥

इति हिंदोलवसंतः ॥

आनंदभैरवीरागो भैरवीमेलसंभवः ॥

पूर्णः षड्ग्रहन्यासः सायमेष प्रगीयते ॥

इत्यानंदभैरवी ॥

आभेरीरागः संपूर्णो भैरवीरागमेलजः ॥
सांशः पंचमभाषाख्यः सायंकाले प्रगीयते ॥

इत्याभेरी ॥

उपांगं नागगांधारी भैरवीरागमेलजा ॥
संपूर्णा सग्रहन्यासा प्रातरेषा प्रगीयते ॥

इति नागगांधारी ॥

संपूर्णा धन्यासिकेयं भैरवीरागमेलजा ॥
सन्यासांशग्रहा प्रातर्गेया संगीतकोविदैः ॥

इति धन्यासी ॥

हिंदोलो भैरवीमेलसंजातो रिपवर्जितः ॥
औडुवः सर्वदा ज्ञेयः संगीतागमकोविदैः ॥

इति हिंदोलः ॥

सर्वेषु रागमेलेषु मुखारीमेल आदिमः ॥
शुद्धैः सप्तस्वरैर्युक्तो मुखारीमेल ईरितः ॥
चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ॥
द्वेद्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥
शुद्धा इत्युक्तसंख्याकश्रुतिकाः सादयो मताः ॥
अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ॥
लोके प्रसिद्धनामायं शास्त्रसिद्धाभिधस्त्वसौ ॥
शुद्धसाधारित इति तुलजेंद्रेण निश्चितः ॥

इति मुखारी ॥

शुद्धाः स्युः षड्जरिमपा गांधारोऽतरसंज्ञकः ॥
पंचश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ॥
मेलोऽयं वेगवाहिन्या एतैः सप्तस्वरैर्युतः ॥

मेलेऽस्मिन् सांप्रतं वेगवाहिन्येकैव दृश्यते ॥
षड्ग्रहांशकन्यासा संपूर्णा वेगवाहिनी ॥
स्वमेलजा दिनस्यांते ज्ञेया संगीतकोविदैः ॥

इति वेगवाहिनी ॥

शुद्धाः सपरिधाः साधारणगांधार एव च ॥
काकल्याख्यनिषादो विकृतपंचममध्यमः ॥
एतैः सप्तस्वरैर्युक्तः सिंधुरामक्रिमेलकः ॥
अस्मिन् मेले सिंधुरामक्रिया पंतुवराळिका ॥
सिंधुरामक्रिरागोऽयं संपूर्णः सग्रहांशकः ॥
सायंकाले तु गातव्यः स्वमेलोत्थो ह्ययं बुधैः ॥

इति सिंधुरामक्रीरागः ॥

षड्ग्रहांशकन्यासा पूर्णा पंतुवराळिका ॥
सर्वदेयं प्रगातव्या सिंधुरामक्रिमेलजा ॥

इति पंतुवराळी ॥

गांधारोंऽतरसंज्ञोऽन्ये शुद्धाः षड्जादयः स्वराः ॥
एतैः सप्तस्वरैर्युक्तो हेजिज्जीरागमेलकः ॥
हेजिज्जीप्रमुखा रागा अस्मिन्मेले भवंति हि ॥
हेजिज्जीरागः संपूर्णो यामेऽह्नो गीयतेंऽतिमे ॥
षड्ग्रहांशकन्यासः स्वमेलोत्थो मतः सताम् ॥

इति हेजिज्जी ॥

काकल्याख्यनिषादोऽन्ये शुद्धाः षड्जादयः स्वराः ॥
युता एते यत्र सामवराळीमेलकस्तु सः ॥
अस्मिन्सामवराळी च रागो गांधारपंचमः ॥
भिन्नपंचमरागाद्या रागा अन्ये भवंति हि ॥
रागः सामवराळ्याख्यः स्यात्संपूर्णः स्वमेलजः ॥
षड्ग्रहांशकन्यासः सायमेष प्रगीयते ॥

आरोहे गांधारलंघनम् ।

इति सामवराळी ॥

गांधारपंचमः सामवराळीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सायंकाले प्रगीयते ॥

इति गांधारपंचमः ॥

मेलात्सामवराळ्यास्तु जातोऽयं भिन्नपंचमः ॥
संपूर्णः सग्रहांशोऽपि सायमेष प्रगीयते ॥

इति भिन्नपंचमः ॥

शुद्धाः स्युः सरिमपधा गांधारोंतरसंज्ञकः ॥
कैशिक्याख्यनिषादश्च ह्येतैः सप्तस्वरैर्युतः ॥
वसंतभैरवीरागमेलः स्यात् पंचमाल्पकः ॥
मध्यमग्रामजन्यत्वसंदेहं जनयत्ययम् ॥
वसंतभैरव्येतस्मिंस्तथा ललितपंचमः ॥

इति वसंतभैरवी ॥

वसंतभैरवीमेलजातो ललितपंचमः ॥
संपूर्णः सग्रहन्यासः प्रातर्गेयः शुभप्रदः ॥

इति ललितपंचमः ॥

शुद्धाः स्युः सरिमपधा गः साधारणसंज्ञकः ॥
काकल्याख्यनिषादश्च ह्येतैः सप्तस्वरैर्युतः ॥
मेलः स्याद्भिन्नषड्जस्य भिन्नषड्जादयः पुनः ॥
केचिद्रागा भवंत्यत्र भिन्नषड्जश्च लक्ष्यते ॥
भिन्नषड्जः स्वमेलोत्थः संपूर्णः सग्रहांशकः ॥
रिन्यासः प्रथमे यामे गेयोऽह्नो गीतवेदिभिः ॥

इति भिन्नषड्जः ॥

भूपालो भिन्नषड्जीयमेलोत्थो मनिवर्जितः ॥
ओडवः सग्रहांशश्च प्रातर्गेयः शुभप्रदः ॥

इति भूपालः ॥
शुद्धाः स्युः समपा यत्र ऋषभः षट्श्रुतिस्तथा ॥
अंतराख्यातगांधारः पंचश्रुतिकधैवतः ॥
काकल्याख्यनिषादश्च स स्याद्देशाक्षिमेलकः ॥
देशाक्षीप्रमुखा रागा अत्र मेले भवंति हि ॥
देशाक्षीरागः संपूर्णः स्वमेलोत्थश्च सग्रहः ॥
सन्यासः प्रातःकाले तु गेयः संगीतकोविदैः ॥
इति देशाक्षी ॥
समपाः स्युस्त्रयः शुद्धाः षट्श्रुत्यृषभसंज्ञकः ॥
अंतराख्यातगांधारः पंचश्रुतिकधैवतः ॥
कैशिक्याख्यनिषादश्चेत्येतत्सप्तस्वरैर्युतः ॥
छायानाटस्य मेलोऽस्मिन्नेतदाद्या भवंति हि ॥
छायानाटः स्वमेलोत्थः संपूर्णः सग्रहांशकः ॥
उपांगं सायमेवैष गेयः संगीतकोविदैः ॥
इति छायानाटरागः ॥
शुद्धौ सपौ च ऋषभः पंचश्रुतिकसंज्ञकः ॥
शुद्धमध्यमगांधारस्ततः स्यादुच्चमध्यमः ॥
लौकिकोऽसौ शास्त्रतो विकृतपंचममध्यमः ॥
षट्श्रुतिर्धैवतश्च स्यात् काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः सारंगस्य हि मेलकः ॥
सारंगप्रमुखा रागा अत्र केचिद्भवंति हि ॥
शुद्धस्य मध्यमस्यात्र गांधारत्वेनकीर्तनात् ॥
शुद्धमध्यमगांधारसंज्ञाऽस्यैव मया कृता ॥
इति सारंगरागः ॥
इतिश्रीभैरवीमेलजाता रागा निरूपिताः ॥
तुलजेंद्रेण संगीतसारामृत इह स्फुटम् ॥
इति शुभम् ॥

# जाहिरात.

## संगीतावर उपयोगी पुस्तकें.

१ श्रीमल्लक्ष्यसंगीतम् ( संस्कृतभाषेंत )
२ श्रीमद्रागकल्पद्रुमांकुरः ( " )
३ रागचंद्रिका ( " )
४ अष्टोत्तरशततालक्षणम् ( " )
५ संगीतदर्पणम् ( गुर्जरभाषेंत )
६ संगीतरत्नाकर ( " )
७ स्वरमालिका ( " )
८ हिंदुस्थानी संगीत पद्धति ( मराठींत )
९ हिंदुस्थानी संगीत पद्धति ( गुर्जरभाषेंत )
१० रागचंद्रिकासार ( हिंदीभाषेंत )
११ संगीतसारामृतोद्धारः ( रागविवेक )
१२ लक्षणगीतसंग्रह ( भाग १ ते ३ )
१३ स्वरमेलकलानिधि. ( मराठीभाषांतरासह )

अलिकडे आपले येथें संगीताची अभिरुचि फारच वाढत्या प्रमाणावर आहे, हें प्रसिद्धच आहे. अशा वेळीं आपल्या प्राचीन व अर्वाचीन संगीतावर उपयुक्त माहिती देतील, असे ग्रंथ छापून प्रसिद्ध झाल्यास त्यांपासून समाजांत संगीतज्ञानाची वृद्धि होऊन कदाचित प्रचलित संगीताला योग्य वळणही लागण्याचा संभव आहे, असें समजून हे ग्रंथ प्रसिद्ध करण्यांत आले आहेत. हे ग्रंथ पैसा मिळविण्याच्या हेतूनें मुळींच छापविलेले नाहींत. अशा प्रयत्नाला उत्तेजन व आश्रय देणें आपल्या सुशिक्षित वर्गाकडे आहे, हें उघड आहे. किंबहुना, त्यांचे सेवेसाठींच ते प्रसिद्ध झाले आहेत, असेंही ह्मणतां येईल.

पुस्तकांसंबंधीं पत्रव्यवहार खालील पत्त्यावर करावा—

पत्ता:—**शंकर रामचंद्र गोंगे.**

४ खऱ्याची चाळ गायवाडी, **मुंबई.**

# संगीतसारामृतोद्धारः ।

अयं ग्रंथः

भालचंद्रशर्मणा

मुम्बय्यां

निर्णयसागरयंत्रालये कोलभाटवीथ्यां २३ नं०
बा. रा. घाणेकरद्वारा मुद्राक्षरैरंकयित्वा
प्राकाश्यं नीतः ।

शके १८३३. सन १९११.

॥ श्रीः ॥

# संगीतसारामृतोद्धारः ।

by
Tulajaji (1763-1787)

अयं ग्रंथः

## भालचंद्रशर्मणा

मुम्बय्यां

निर्णयसागरयंत्रालये कोलभाटवीथ्यां २३ नं०

बा. रा. घाणेकरद्वारा मुद्राक्षरैरंकयित्वा

प्राकाश्यं नीतः ।

शके १८३३. सन १९११.

॥ श्रीः ॥

# अथ संगीतसारामृतोद्धारः प्रारभ्यते।

संगीतप्रणवं स्मृत्वा नत्वा तदुपदेशकम् ॥
शास्त्रप्रवर्तकांश्चैव भरतादिमुनीन् गुरून् ॥ १ ॥
श्रीशंभोः करुणासिंधोः प्रसादात्तुलजाधिपः ॥
सुखं बोधाय सद्रागविवेकं रचयत्यमुम् ॥ २ ॥
अथ स्वरश्रुतिग्रामजात्यादिभ्यः समुत्थिताः ॥
रागा बहुविधाः प्रोक्ता मुनिभिर्भरतादिभिः ॥ ३ ॥
ते हि मेलोद्भवा रागास्तेषु युक्तिपुरःसरम् ॥
निरूप्यंते मतंगादिऋषिप्रोक्तप्रकारतः ॥ ४ ॥
योयं ध्वनिविशेषः स्यात् स्वरवर्णविभूषितः ॥
रंजको जनचित्तानां स रागः कथ्यते बुधैः ॥ ५ ॥
स्वरवर्णविशिष्टेन ध्वनिभेदेन वा जनः ॥
रज्यते येन कथितः स रागः संमतः सताम् ॥ ६ ॥
अश्वकर्णादिवद्रूढो यौगिको वाऽपि मंथवत् ॥
योगरूढश्चवा रागो ज्ञेयः पंकजशब्दवत् ॥ ७ ॥
तेष्वनेकविधेष्वेव ग्रामरागादयः पुनः ॥
रागा अंतरभाषांता मार्गरागाः प्रकीर्तिताः ॥ ८ ॥
अतो गंधर्वलोकेषु प्रयोज्यास्ते व्यवस्थिताः ॥
रागांगाद्यास्तु चत्वारः प्रसिद्धा देशसंज्ञिताः ॥ ९ ॥
रागांगादिनिरुक्तिश्च मतंगेनैव दर्शिता ॥
ग्रामोत्थानां तु रागाणां छायामात्रं भजंति हि ॥ १० ॥
गीतज्ञैः कथिताः सर्वे रागांगास्तेन हेतुना ॥
भाषाच्छायाश्रिता ये च जायंते सदृशाः किल ॥ ११ ॥

भाषागास्तेन कथ्यंते गायकैः सौतिकादिभिः ॥
करुणोत्साहशोकादिप्रबला या क्रिया ततः ॥ १२ ॥
जायंते च ततो नाम क्रियांगास्तेन कारणात् ॥
रागच्छायानुकारित्वादुपांगमिति कथ्यते ॥ १३ ॥
तत्र प्रसिद्धिविधुरांस्त्यक्त्वा रागांस्तु कांश्चन ॥
सर्वत्र लक्ष्यमार्गेऽत्र संप्रति प्रचरंति ये ॥ १४ ॥
त एव संगृहीतव्या रागा इति विनिश्चयः ॥
त्रिषु ग्रामेषु गांधारग्रामः स्वर्गे प्रकीर्तितः ॥ १५ ॥
महीतले तु द्वौ ग्रामौ स्यात् षड्जग्राम आदिमः ॥
द्वितीयो मध्यमग्रामो नत्वेतल्लक्ष्म लक्षितम् ॥ १६ ॥
लक्ष्ये तु दृश्यते क्वापीत्यस्यासत्प्रायता मता ॥
अतोऽत्र मध्यमग्रामजन्यरागेषु पंचमः ॥ १७ ॥
स्वोपांत्यश्रुतिसंस्थः सन्नैष लक्ष्येषु दृश्यते ॥
ततः स्युरखिला रागाः षड्जग्रामसमुद्भवाः ॥ १८ ॥
तदुक्तं मंत्रिरामेण स्वरमेलकलानिधौ ॥
देशीरागाश्च सकलाः षड्जग्रामसमुद्भवाः ॥ १९ ॥
ग्रहांशतारमंद्रादिषाडवौडुवपूर्णताः ॥
देशीत्वात्सर्वरागेषु भवंति न भवंति च ॥ २० ॥
प्रकाशयत्येवमेव चतुर्दंडिप्रकाशिका ॥
ग्रामेष्वेतेषु गांधारग्रामो नास्ति महीतले ॥ २१ ॥
स्वर्गलोके वर्ततेऽसौ सर्वेषामेव संमतम् ॥
अस्माभिर्मध्यमग्रामोऽप्यसत्प्राय इतीर्यते ॥ २२ ॥
तथाहि मध्यमग्रामे त्रिश्रुतिः पंचमः खलु ॥
वराळीमध्यमो जातः स पुनर्लक्ष्यमार्गतः ॥ २३ ॥
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ॥
रागेषु दृश्यते नैव वराळीमध्यमस्ततः ॥ २४ ॥

अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥
एक एव ततः षड्ग्राम इत्यवधार्यते ॥ २५ ॥
षड्ग्रामोद्भवा रागा इत्यनेन निरूपितम् ॥
तदुक्तं हि विठ्ठलीये ग्रामैकत्वसमर्थनम् ॥ २६ ॥
स्वराणां निचयो ग्रामो मूर्छनादिसमाश्रयः ॥
भरतेनोदिते शास्त्रे ग्रामौ द्वौ षड्जमध्यमौ ॥ २७ ॥
षड्ग्रामः पंचमे तु सप्तदश्यां श्रुतौ स्थिते ॥
स्वरेऽस्मिन् पंचमे किंतु षोडशीं श्रुतिमाश्रिते ॥ २८ ॥
तदैव मध्यमग्रामः सोऽत्र रागे न दृश्यते ॥
षड्ग्रामाश्रितान् रागान् सर्वे गायंति गायकाः ॥
तस्मान्मुख्यतमः षड्ग्राम एव न मध्यमः ॥ २९ ॥
गानादौ गृह्यते येन स्वरेण तुलितो ध्वनिः ॥
स षड्जः श्रुतिशब्देन लोक उद्घुष्यते जनैः ॥ ३० ॥
स्वरो धर्तव्य इत्युक्ते निखिलोत्तरगायनैः ॥
ध्रियते यः स्वरः स स्यात् षड्ज एव न चापरः ॥ ३१ ॥
तादृक् षड्जप्रधानत्वाद्ग्रामोऽयं हि प्रशस्यते ॥
स्वरमेलोद्भवा रागाः कथ्यंते लक्ष्यवेदिभिः ॥ ३२ ॥
कथं षड्ग्रामजन्या रागा इति भवन्मतम् ॥
इति चेदुच्यते षड्ग्रामेणैव समार्थकः ॥ ३३ ॥
घटकुंभादिवन्मेलशब्दो लोके प्रदृश्यते ॥
तस्मात्क्वचित्स्वरग्रामः स्वरमेल इतीर्यते ॥ ३४ ॥
षड्जप्रधानको ग्रामः षड्ग्रामः प्रकीर्तितः ॥
व्युत्पन्ना ये मतंगाद्यै रागास्ते दशलक्षणाः ॥ ३५ ॥
भवंति तल्लक्षणानि व्याख्यातानि च तैर्यथा ॥
तथैव तानि लिख्यंते यथावदनुपूर्वशः ॥ ३६ ॥
ग्रहांशतारमंद्राश्च न्यासापन्यासकौ तथा ॥
अपि संन्यासविन्यासौ बहुत्वं चाल्पता यथा ॥ ३७ ॥

लक्षणानि दशैतानि रागाणां मुनयोऽब्रुवन् ॥
दशानामपि चैतेषां क्रमाल्लक्षणमुच्यते ॥ ३८ ॥
येनादौ गीयते गीते स्वरेण स भवेद्ग्रहः ॥
बहुशो गीयते येन स्वरेणांशः स कथ्यते ॥ ३९ ॥
अंशः स्वरोऽप्यसावेव जीवस्वर इति स्मृतः ॥
नीचैः स्वरेण यद्गानं स मंद्रस्वर उच्यते ॥ ४० ॥
उच्चैः स्वरेण यद्गानं स तारस्वर उच्यते ॥
न्यासस्वरः स कथितो येन गीतं समाप्यते ॥ ४१ ॥
अवांतरसमाप्तिं यो रागस्य वितनोति सः ॥
अपन्यासः स स्मृतोऽन्यस्त्वात्यंतिकसमाप्तिकृत्॥४२॥
इति भेदो भवेन्न्यासापन्यासस्वरयोर्द्वयोः ॥
संन्यासो नाम गीताद्यखंडस्यैव समाप्तिकृत् ॥ ४३ ॥
गीतखंडाद्यावयवस्यांते तिष्ठति स स्वरः ॥
विन्यास एतौ संन्यासविन्यासौ भरतादिभिः ॥ ४४ ॥
अंतर्भूतावपन्यासस्वर एवेति कीर्तितम् ॥
अलंघनं तदभ्यासो बहुत्वं द्विविधं मतम् ॥ ४५ ॥
स्वरस्यास्पर्शनं यत्तल्लंघनं परिकीर्तितम् ॥
साकल्येन स्वरस्पर्शस्त्वलंघनमिति स्मृतम् ॥ ४६ ॥
यदेकस्य स्वरस्यैव नैरंतर्येण वाथवा ॥
व्यवधानेन स्याद्भूयोभूयोऽप्युच्चारणं हि तत् ॥ ४७ ॥
अभ्यास इति शंसंति बहुत्वं द्विविधं ततः ॥
अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लंघनात् ॥ ४८ ॥
पूर्वोक्ताभ्यासराहित्यमनभ्यासः प्रकीर्तितः ॥
पूर्वोक्तालंघनाभावो लंघनं परिकीर्तितम् ॥ ४९ ॥
लक्षणानि दशाप्येवं लक्षितानीह प्रस्फुटम् ॥
प्रत्येकमथ रागाणां मेलनादि निरूप्यते ॥ ५० ॥

रागाः सम्यक् निरूप्यंते ह्युदाहरणपूर्वकम् ॥
मेलज्ञानं विना मेलजन्यं ज्ञातुं न शक्यते ॥ ५१ ॥
तस्मात्तन्मेलबोधार्थं तत्स्वरूपं निरूप्यते ॥
षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ॥ ५२ ॥
ऋषभाख्यातकाश्चापि गांधाराख्यातकाश्चते ॥
आद्यस्तत्र न गांधारश्चतुर्थ ऋषभो न हि ॥ ५३ ॥
ऋषभावपि गांधारौ द्वितीयकतृतीयकौ ॥
प्रथमादित्रयं ह्यत्र भवेदृषभसंज्ञकम् ॥
द्वितीयादित्रयं चात्र गांधारसंज्ञितं भवेत् ॥ ५४ ॥
षड्जस्वरस्य पुरतश्चत्वारः स्युः स्वरा यथा ॥
पंचमस्यापि पुरतश्चत्वारः स्युः स्वरास्तथा ॥ ५५ ॥
धैवताद्या निषादाद्याः प्रथमाद्यास्तु धैवताः ॥
द्वितीयाद्या निषादाः स्युर्मुखार्यादिषु तु त्रिषु ॥ ५६ ॥
रागेष्वथ धनी शुद्धौ द्वितीयौ तु धनीरितौ ॥
पंचश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ॥ ५७ ॥
तृतीयौ षट्श्रुतिस्थो धः काकल्याख्यनिषादकः ॥
त्रिष्वेषु युगलेष्वन्यतरत्संग्राह्यमीरितम् ॥ ५८ ॥
स्वरेषु द्वादशस्वेषु तत्तद्रागोपयोगतः ॥
तत्तत्स्वरसमूहात्मा मेल इत्येवमीरितः ॥ ५९ ॥
विशेषसंज्ञया सम्यक् संज्ञिता ये स्वराः पुरा ॥
त एतेऽप्यत्र विज्ञेयास्तद्विशेषपुरःसरम् ॥ ६० ॥
स्वराः स्युः श्रुतिनिष्पन्नाः श्रुतिन्यूनाधिकत्वतः ॥
एते बहुविधाः शुद्धा विकृता व्यावहारिकाः ॥ ६१ ॥
इति त्रिधा निगद्यंते, तान् ब्रूमोऽत्र विशेषतः ॥
षड्जाद्याः शुद्धशब्दाद्याः स्वराः शुद्धा इतीरिताः ॥६२॥
शुद्धषड्जस्तथाशुद्धर्षभ इत्यादिनामभिः ॥
अत्रैते व्यवहर्तव्या विकृतास्तत्तदाख्यया ॥ ६३ ॥

ताभिस्तेऽत्र निरूप्यंते क्रमशो विकृताः स्वराः ॥
साधारणाख्यगांधारोंऽतरगांधार एव च ॥ ६४ ॥
पंचमोपांत्यश्रुतौ विकृतपंचममध्यमः ॥
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥ ६५ ॥
पंचैते विकृताः शुद्धैः स्वरैर्द्वादश कीर्तिताः ॥
विहाय स्वस्वसंज्ञा ये स्वरा अन्योन्यसंज्ञकाः ॥ ६६ ॥
तेषां नामांतराण्यत्र विहितानीह तद्यथा ॥
शुद्धगांधार एवायं पंचश्रुत्यृषभाह्वयः ॥ ६७ ॥
साधारणाख्यगांधारः षट्श्रुत्यृषभसंज्ञितः ॥
तथा शुद्धनिषादोऽपि स्यात्पंचश्रुतिधैवतः ॥ ६८ ॥
स्यात्कैशिकनिषादोऽपि तथा षट्श्रुतिधैवतः ॥
लक्ष्यानुसारतस्त्वेतल्लौकिकं सुखबोधकम् ॥ ६९ ॥
तदेतत्स्वरसंघातरूपा मेला निरूपिताः ॥
अथ मेलोद्भवा रागा निरूप्यंते यथाक्रमम् ॥ ७० ॥
भेदा बहुविधास्तत्र द्विसप्ततिरिति स्फुटम् ॥
निरूपयति तद्भेदांश्चतुर्दंडिप्रकाशिका ॥ ७१ ॥
एकोनविंशतिस्तत्र तेनैव समुदाहृताः ॥
मेलाः प्रस्तारतो नेया द्विसप्ततिरुपायतः ॥ ७२ ॥
इत्येवं विविधा मेलाः प्रस्तारपरिभाषया ॥
उन्नीतास्तेन तत्रेति त्यक्त्वा तानप्रसिद्धकान् ॥ ७३ ॥
तत्तद्देशप्रसिद्धेन रागनाम्ना विशेषतः ॥
प्रसिद्धाः कतिचिन्मेला उद्दिश्यंते मया क्रमात् ॥
अत्र सर्वेषु रागेषु श्रीरागश्चोत्तमोत्तमः ॥ ७४ ॥

### तदुक्तं सोमेश्वरमते ॥

शिवशक्तिसमायोगाद्रागाणां संभवो भवेत् ॥
पंचास्यात् पंचरागाः स्युः षष्ठस्तु गिरिजामुखात्॥७५॥

सद्योवक्त्रात्तु श्रीरागो वामदेवाद्वसंतकः ॥
अघोराद्भैरवो जातस्तत्पुरुषात्तु पंचमः ॥ ७६ ॥
ईशानाख्यान्मेघरागो नाट्यारंभे शिवादभूत् ॥
गिरिजाया मुखाल्लास्ये नटनारायणोऽभवत् ॥ ७७ ॥

अथ मेलाः ॥

तत्र श्रीरागमेलोऽथ शुद्धनाटयाश्च मेलकः ॥
ततो मालवगौडस्य वेलावल्याश्च मेलकः ॥ ७८ ॥
वराळयाख्यश्च रामक्रीरागमेलस्ततःपरम् ॥
शंकराभरणाह्वोऽपि मेलः स्यात्तदनंतरम् ॥ ७९ ॥
कांबोजीरागमेलः स्याद्भैरव्या मेलकस्तथा ॥
मुखारिमेलको वेगवाहिन्याश्चैव मेलकः ॥ ८० ॥
सिंधुरामक्रियामेलो हेजिज्जीमेलकस्ततः ॥
मेलः सामवराळयाख्यरागस्यातःपरं ततः ॥ ८१ ॥
वसंतभैरवीमेलो भिन्नषड्जस्य मेलकः ॥
देशाक्षीरागमेलश्च छायानाटस्य मेलकः ॥ ८२ ॥
सारंगरागमेलश्च तोडीमेलस्ततःपरम् ॥
कल्याणीरागमेलश्चेत्येकविंशतिरीरिताः ॥ ८३ ॥

अथ मेलजन्यरागाः ॥

मेलोद्भवेषु रागेषु श्रीरागोऽत्र चिरंतनैः ॥
ग्रामराग इति प्रोक्तो रागांगमिति कैश्चन ॥ ८४ ॥
श्रीरागो रागराजोऽयं सर्वसंपत्प्रदायकः ॥
इत्युच्यते तत्र लक्ष्म तुलजेंद्रेण धीमता ॥ ८५ ॥
श्रीरागः परिपूर्णः सग्रहांशन्याससंयुतः ॥
गेयः सायाह्नसमये ह्यथ तानविवर्जितः ॥ ८६ ॥
शुद्धाः स्युः समपाः पंचश्रुती ऋषभधैवतौ ॥
साधारणाख्यगांधारः कैशिक्याख्यनिषादकः ॥ ८७ ॥

एतैः सप्तस्वरैर्युक्तो यो मेलस्तत्र चादिमः ॥
श्रीरागस्तन्मेलजातानुद्दिशामीह कांश्चन ॥ ८८ ॥
श्रीरागरागराजोऽथ रागः कंनडगौळकः ॥
देवगांधारकाख्यश्च तथा सालगभैरवी ॥ ८९ ॥
तथा स्याच्छुद्धदेशी च स्यान्माधवमनोहरी ॥
मध्यमग्रामरागश्च सैंधवी काफिकाह्वयः ॥ ९० ॥
हुसेनीति च संपूर्णा अत्र रागा उदाहृताः ॥
श्रीरंजनी मालवश्रीस्तथा देवमनोहरी ॥ ९१ ॥
जयंतसेनसंज्ञश्च मणिरंगश्च षाडवाः ॥
मध्यमादिस्तथा शुद्धधन्यासीत्यौडुवौ मतौ ॥ ९२ ॥
षाडवौडुवसंपूर्णा रागा अत्र समीरिताः ॥
तुळजेंद्रेण संगीतसारामृत इति स्फुटम् ॥ ९३ ॥

**टीप**—हा संगीत सारामृत ग्रंथ महाराज तुळजीराव भोंसले जे तंजावरच्या गादीवर होते, त्यांनीं लिहिला, असें तेथें म्हटलें आहे. कदाचित् त्यांच्या पदरच्या कोणी पंडितानें लिहून त्यांच्या नांवानें तो प्रसिद्ध केला असेल. हे महाराज शिवाजी महाराजांच्याच वंशांतले एक पुरुष होते, असें दिसतें, कारण ग्रंथाच्या प्रारंभींच्या वंशवर्णनांत मालोजी, शहाजी, जीजाबाई, संभाजी, शिवाजी, व्यंकोजी वगैरे सारीं नांवें आहेत. या नांवांवरून या ग्रंथाचा काल तर स्पष्टच आहे. या ग्रंथांतली संगीतपद्धति दक्षिणेकडचीच आहे, म्हणजे ती व्यंकटेश्वर पंडिताची आहे. या ग्रंथांत संगीतोपयोगी स्वर आपले हिंदुस्थानी पद्धतीचेच बारा आहेत. त्यांचीं नांवें मात्र दक्षिण पद्धतीला अनुसरून आहेत. रागविबोध, स्वरमेलकलानिधि, चतुर्दंडिप्रकाशिका, हे ग्रंथ या ग्रंथाच्या अगोदरचे आहेत, व ते सारे या ग्रंथकाराला माहीत होते. आपल्या हिंदुस्थानी पद्धतींत, दुपारीं बारा वाजल्यापासून रात्रीं बारावाजेपर्यंतचे ते पूर्वांगवादी पूर्वराग, व रात्रीं बारावाजल्यापासून पुनः दुपारपर्यंतचे ते उत्तरांगवादी उत्तर राग, अशी जी सोयीची रचना पंडितांनीं मानिली आहे, तशी या दक्षिण पद्धतीच्या कोणत्याच ग्रंथांत दिसत नाहीं, ही एक ध्यानांत ठेवण्याजोगी गोष्ट आहे. या हिंदुस्थानी रचनेचा संबंध ज्या वेळीं दुपारपासून दुपारपर्यंत एक संपूर्ण दिवस मानीत असत, त्या वेळेशीं असेल. निदान आपल्या हिंदुस्थानी संगीताचा एकंदर कल तशा धोरणावर मार्मिकांस दिसून

येतो, हें खरें आहे. दक्षिणेकडे वादी संवादी स्वरांच्या महत्वाकडे तितकें लक्ष्य दिलेलें दिसण्यांत येत नाहीं. सारामृतांत रागोपयोगी जे बारा स्वर मानिले आहेत, ते असे आहेत. १ शुद्धषड्ज २ शुद्धऋषभ ३ पंचश्रुतिऋषभ अथवा शुद्धगांधार ४ षट्श्रुतिऋषभ अथवा साधारणगांधार ५ अंतरगांधार ६ शुद्धमध्यम ७ विकृतपंचममध्यम ८ शुद्धपंचम ९ शुद्धधैवत १० पंचश्रुतिधैवत अथवा शुद्धनिषाद ११ षट्श्रुतिधैवत अथवा कैशिकनिषाद १२ काकलीनिषाद. या बारा स्वरांशीं तुल्य हिंदुस्थानी पद्धतीचे स्वर क्रमानें असे समजावे. १ शुद्धषड्ज २ कोमलऋषभ ३ तीव्र अथवा शुद्धऋषभ ४ कोमलगांधार ५ तीव्रगांधार अथवा शुद्धगांधार ६ शुद्धमध्यम ७ तीव्रमध्यम ८ पंचम ९ कोमलधैवत १० तीव्र अथवा शुद्धधैवत ११ कोमलनिषाद १२ तीव्रनिषाद अथवा शुद्धनिषाद. या खुलाशानें दक्षिणेकडच्या बहुतेक ग्रंथांच्या रागांचा खुलासा करतां येईल. सारामृतांत श्रुति, मूर्छना, ग्राम, तान जाति वगैरे भाग आहेत, परंतु ते ग्रंथकर्त्यानें संगीत रत्नाकरांतून उतरून घेतले असल्यामुळें व रत्नाकर ग्रंथ आतां छापून प्रसिद्ध झाला असल्यामुळें, ते येथें उतरून घेतले नाहींत. त्या भागांचा खुलासा ग्रंथकारास मुळींच झाला नव्हता, असें स्पष्ट दिसतें. सारामृतकारानें मेलसंख्या एकंदर ७२ कबूल करून प्रचारांतले प्रसिद्ध २१ मेल सांगितले आहेत व त्यांतून निघणाऱ्या सुमारें ११० जन्य रागांचें वर्णन केलें आहे. या ग्रंथांत रत्नाकरांतलेही कांहीं कांहीं राग आले आहेत, व त्यांचे मेल वगैरे स्पष्ट आहेत, परंतु रत्नाकरवर्णनांशीं एकवाक्यता करण्याचा प्रयत्न ग्रंथकारानें न केल्यामुळें त्याचीं वर्णनें निराधार राहतात. ग्रंथकारानें प्रत्येक राग सांगून त्याचे पुढें लहान उदाहरणेंही दिलीं आहेत, तीं आम्हीं येथें घेतलीं नाहींत. प्रचारांत मध्यमग्राम मुळींच नाहीं वगैरे गोष्टी ग्रंथकारानें जोरानें सांगितल्या आहेत, तो भाग चतुर्दंडिप्रकाशिकेच्या आधारानें आहे. मध्यमग्रामांतला पंचमस्वर तो प्रचारांतला "तीव्रमध्यम" असें या पंडिताचें व व्यंकटेश्वराचें स्पष्ट मत होतें, हें ध्यानांत घेण्याजोगें आहे. संगीतरत्नाकराची रचना तेराव्या शतकांतली ( असें आतां मानितात ) असून ती स्वरमेलकलानिधि, रागविबोध, चतुर्दंडिप्रकाशिका, सारामृत, या सर्वांस शें दोनशें वर्षांत दुर्बोध कां झाली, हें ऐतिहासिक गूढ आहे. कल्लिनाथ पंडिताला देखील रत्नाकराच्या जाति, ग्राम, मूर्छना, राग प्रकरणांचा स्पष्ट खुलासा झाला होता, असा पुरावा अझून प्रसिद्ध झाला नाहीं. खुद्द शार्ङ्गदेवाच्या वेळीं कोणतें संगीत होतें, त्याला मार्ग संगीत कसें आलें, त्यानें आपला ग्रंथ ग्राममूर्छनाजातींनीं कां लिहिला, त्याच्या तालनृत्यवाद्य वगैरे अध्यायांतले शेंकडों श्लोक "दत्तिलकोहलीयम्" या ग्रंथांत त्याच शब्दांनीं व त्याच क्रमानें कसे आले, वगैरे मनोरंजक प्रश्न चौकस विद्यार्थ्यांना विचार करण्याजोगे आहेत. परंतु तें असो. आपण सारामृतांतील मेल व जन्यराग आतां क्रमानें घेऊं.

12



श्रीरागमेलसंजातो रागः कंनडगौळकः ॥
निन्यासांशग्रहोपेतः सप्तस्वरसमन्वितः ॥
वक्रस्वरगतिश्लिष्टोऽसावारोहावरोहयोः ॥
गेयोऽह्नः पश्चिमे याम उत्कलानामतिप्रियः ॥
उपांगमेनं शंसंति संगीतागमपारगाः ॥

इति कंनडगौळः ॥

श्रीरागमेलजः पूर्णो देवगांधारकाभिधः ॥
गातव्यः प्रातरेवैष षड्जन्यासग्रहांशकः ॥
आरोहे रिधवर्ज्यो वाऽऽरोहे रिधसमन्वितः ॥

इति देवगांधारः ॥

श्रीरागमेलसंजाता पूर्णा सालगभैरवी ॥
षड्जन्यासग्रहांशाऽसौ यामे गेया तुरीयके ॥
इति श्रीतुलजेंद्रेण कथिता सर्वसंमता ॥

इति सालगभैरवी ॥

श्रीरागमेलजातेयं माधवाद्यमनोहरी ॥
पूर्णा गेया सायमेषा षड्जन्यासग्रहांशिका ॥

आरोहे धैवतलंघनं; अवरोहणे पंचमलंघनम् ।

इति माधवमनोहरी ॥

शुद्धदेशीराग एष जातः श्रीरागमेलतः ॥
संपूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ॥

अत्राप्यारोहे गांधारलंघनमिति हेतोः निसारिगरीतिगांधारांतक्रमे गांधार आगच्छति तदुपरिगमने नागच्छति ।

इति शुद्धदेशी ॥

मध्यमग्रामरागः श्रीरागमेलसमुद्भवः ॥
संपूर्णः सग्रहन्यासांशस्त्वयं परिकीर्तितः ॥

इति मध्यमग्रामरागः ॥

श्रीरागमेलसंभूतः सैंधवीराग ईरितः ॥

संग्रामकर्मणि जयप्रदः सायं प्रगीयते ॥
संपूर्णस्वरसंयुक्तः षड्जन्यासग्रहांशकः ॥
इति सैंधवी ॥
काफीरागस्तु संपूर्णः षड्जन्यासग्रहांशकः ॥
श्रीरागमेलसंजातः सायं ज्ञेयः शुभप्रदः ॥
इति काफीरागः ॥
श्रीरागमेलजः पूर्णो हुसेनीराग ईरितः ॥
षड्जग्रहांशकन्यासः सायंकाले प्रगीयते ॥
इति हुसेनी ॥
श्रीरंजनीसमाख्योऽयं रागः श्रीरागमेलजः ॥
षाडवः स तु विज्ञेयः पंचमस्वरवर्जनात् ॥
षड्जग्रहांशकन्यासः सायंगेयः प्रकीर्तितः ॥
इति श्रीरंजनीरागः ॥
श्रीरागमेलसंजाता षड्जन्यासग्रहांशिका ॥
रिवर्जिता मालवश्रीः षाडवा मंगलप्रदा ॥
रागांगमेनां शंसंति सा गेया सर्वदा बुधैः ॥
इति मालवश्रीः ॥
श्रीरागमेलसंभूता सेयं देवमनोहरी ॥
गवर्जनात् षाडवा स्यात् षड्जन्यासग्रहांशिका ॥
अवरोहे धैवतलंघनम् ।
इति देवमनोहरी ॥
जयंतसेनको रागो जातः श्रीरागमेलतः ॥
रिवर्जितः षाडवोऽयं षड्जन्यासग्रहांशकः ॥
इति जयंतसेनः ॥
श्रीरागमेलसंजातो मणिरंगः प्रकीर्तितः ॥
सग्रहांशन्यासयुक्तः षाडवः स्याद्धवर्जनात् ॥

इति मणिरंगः ॥

मध्यमादिस्तु रागांगं जातः श्रीरागमेलतः ॥
गधलोपादौडुवोऽयं सायंकाले तु गीयते ॥
रक्तिरेतस्य रागस्य मुरल्यां दृश्यतेऽधिका ॥

इति मध्यमादिः ॥

धनाश्रीरागो रागांगं, जातः श्रीरागमेलतः ॥
रिधलोपादौडुवोऽयं प्रातर्गेयः शुभप्रदः ॥

इति धनाश्रीरागः ॥

शुद्धाः स्वराः स्युः समपाः षट्श्रुत्यृषभधैवतौ ॥
अंतराख्यातगांधारः काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः शुद्धनाट्याश्च मेलकः ॥
अस्मिन्मेले शुद्धनाटीमुख्या रागाः प्रकीर्तिताः ॥
नाटी भाषांगं संपूर्णा षड्जन्यासग्रहांशिका ॥
सायंकाले तु गातव्याऽवरोहे गधवर्जिता ॥

इति शुद्धनाटी ॥

अथ रागोदयरविचंद्रिका नाटमेलजा ॥
टक्कभाषेति विज्ञेया संपूर्णा सग्रहांशिका ॥
धगवर्ज्यौडुवा सेयं सायंगेया तु नाटवत् ॥

इत्युदयरविचंद्रिका ॥

शुद्धाः स्युः समपाः शुद्धऋषभः शुद्धधैवतः ॥
अंतराख्यातगांधारः काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तो यो मेलः परिकीर्तितः ॥
सोऽयंमालवगौळः स्यात्संमतो गानवेदिनाम् ॥
अस्मिन्मेले तु ये रागा जायंते तानथ ब्रुवे ॥
आद्यो मालवगौळः स्यात् ततः सालगनाटिका ॥
रागोयमार्द्रदेशाख्यः छायागौळाह्वयस्तथा ॥
टक्को गुर्जरिका गुंडक्रिया च फलमंजरी ॥

नादरामक्रिसौराष्ट्र्यौ तथा मंगलकैशिकः ॥
मेचबौळिर्मागधी च तथा गौरीमनोहरी ॥
मरुवाख्यो गौळिपंतुः सावेरी पूर्विका तथा ॥
संपूर्णरागा एते स्युः षाडवाः स्युरनंतरम् ॥
गौळश्च ललिता बौळिः पाडिः कंनडपूर्वकः ॥
बंगालोऽयं मल्हरिः पूर्णपंचमसंज्ञकः ॥
शुद्धसावेरिका मेघरंज्याख्या रेवगुप्तिका ॥
मालवीति चतस्रः स्युरौडुवाः परिकीर्तिताः ॥

इति माळवगौळः ॥

सारंगनाटी संपूर्णा षड्जन्यासग्रहांशिका ॥
मेले माळवगौळे स्याज्जाता सायं प्रगीयते ॥

इति सारंगनाटी ॥

मेलान्मालवगौळीयादार्द्रदेशी समुत्थिता ॥
संपूर्णा सग्रहन्यासा प्रातर्गेया प्रकीर्तिता ॥

इत्यार्द्रदेशी ॥

मेलान्मालवगौळस्य छायागौळः समुत्थितः ॥
पूर्णो निषादग्रहोऽयं सर्वकालेषु गीयते ॥

इति छायागौळः ॥

टक्को मालवगौळीयमेलोद्भूतोऽल्पपंचमः ॥
पूर्णः षड्जग्रहादिश्च गेयोऽह्नः पश्चिमे बुधैः ॥

इति टक्कः ॥

मेलान्मालवगौळीयाज्जाता पूर्णा तु गुर्जरी ॥
प्रातःकाले तु सा गेया रिग्रहा परिकीर्तिता ॥

इति गुर्जरी ॥

मेलान्मालवगौळस्योद्भूता गुंडक्रिया प्रगे ॥
गेया संपूर्णतायुक्ता सन्यासांशग्रहा मता ॥

इति गुंडक्रिया ॥
मेलान्मालवगौळीयाज्जातेयं फलमंजरी ॥
सन्यासांशग्रहा पूर्णा सायंकाले प्रगीयते ॥
इति फलमंजरी ॥
मेलान्मालवगौळीयान्नादरामक्रियाभिधः ॥
सायाह्ने गीयते पूर्णः षड्जन्यासग्रहांशकः ॥
इति नादरामक्रियारागः ॥
मेलो मालवगौळस्य स्यात्सौराष्ट्र्याः स एव हि ॥
षड्जन्यासग्रहांशेयं सर्वकालेषु गीयते ॥
इति सौराष्ट्रीः ॥
मेलो मालवगौळीयो मेचबौलेरयं पुनः ॥
संपूर्णः सग्रहादिश्च सदा गेयः शुभावहः ॥
इति मेचबौलिः ॥
मेलो मालवगौळीयो मागध्याः पंचमस्य च ॥
भाषेयं सग्रहन्यासा पूर्णा गेया सदा त्वियम् ॥
इति मागधी ॥
मेले मालवगौळस्य जाता गौरीमनोहरी ॥
संपूर्णा सग्रहादिश्च सायंगेया शुभप्रदा ॥
इति गौरीमनोहरी ॥
मेलान्मालवगौळीयाज्जातो मारुवसंज्ञकः ॥
पूर्णः षड्जग्रहादिश्च सायंगेयः प्रकीर्तितः ॥
इति मारुवः ॥
जाता मालवगौळीयमेलात्सावेरिकाभिधा ॥
पूर्णा प्रातः प्रगातव्या षड्जन्यासग्रहांशिका ॥
इति सावेरी ॥
मेलान्मालवगौळीयादुत्पन्नो गौळिपंतुकः ॥

बोट्टभाषा सग्रहांशः पूर्णः सायं प्रगीयते ॥
आरोहे गधलंघनम् । अवरोहे स्वरगतिरवक्रा ।
इति गौळीपंतुः ॥
मेलान्मालवगौळीयाज्जातोऽयं पूर्विरागकः ॥
तृतीयप्रहरे गेयः पूर्णः षड्जग्रहांशकः ॥
इति पूर्वीरागः ॥
मेलान्मालवगौळीयादुत्पन्नोऽयं विभांशुकः ॥
महीनः षाडवः सांशग्रहः प्रातः प्रगीयते ॥
इति विभासरागः ॥
गौळो मालवगौळीयमेलजो धैवतोज्झितः ॥
षाडवो निग्रहो रागांगोऽयं शश्वत्प्रगीयते ॥
इति गौळः ॥
मेलान्मालवगौळीयाद्बंगालः कंनडादिकः ॥
जातो भाषांगो निवर्जः प्रातर्गेयश्च गग्रहः ॥
आरोहे गांधारलंघनम् । अवरोहे क्रमवक्रतयागांधारः ॥
इति कंनडबंगालः ॥
मेलान्मालवगौळस्य जातोपांगं मवर्जनात् ॥
षाडवा बहुली ज्ञेया सायंकाले तु गग्रहा ॥
इति बहुली ॥
मेलान्मालवगौळीयात् पाडिरागः समुत्थितः ॥
गलोपात् षाडवः सायंगेयः षड्जग्रहादिकः ॥
इति पाडिरागः ॥
मेलान्मालवगौळीयाज्जाता मल्हरी स्मृता ॥
निलोपात् षाडवा प्रातर्गातव्या धैवतग्रहा ॥
इति मलहरिः ॥
पहीना षाडवा टक्कभाषेयं ललिता प्रगे ॥
गेया मालवगौळीयान्मेलाज्जाता च सग्रहा ॥

इति ललिता ॥

पूर्णपंचमरागोऽयं जातो मालवगौळतः ॥
निवर्जनात् षाडवोऽयं षड्जन्यासग्रहांशकः ॥

इति पूर्णपंचमः ॥

मेलान्मालवगौळीयाच्छुद्धसावेरिकाभिधा ॥
गनिलोपादौडुवा सग्रहा गेया प्रगे बुधैः ॥

इति शुद्धसावेरी ॥

मेलान्मालवगौळीयान्मेघरंजः पधोज्झितः ॥
औडुवः पर्जन्यकाले गेयः षड्ग्रहादिकः ॥

इति मेघरंजनी ॥

मेलान्मालवगौळीयादुद्भूतो रेवगुप्तकः ॥
मनिवर्ज्य औडुवः सन्यासः सायं प्रगीयते ॥

इति रेवगुप्तकः ॥

मेलान्मालवगौळीयाट्टक्कभाषा तु मालवी ॥
गधवर्ज्यौडुवा सायं गेया षड्ग्रहांशिका ॥

इति मालवी ॥

शुद्धाः स्युः समपाः पंचश्रुती ऋषभधैवतौ ॥
साधारणाख्यगांधारः काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तो वेलावल्याश्च मेलकः ॥
वेलावली तु भाषांगा पूर्णेयं हि स्वमेलजा ॥
पन्यासांशग्रहा प्रातर्गेया संगीतकोविदैः ॥

इति वेलावली ॥

शुद्धाः स्युः सरिगाः शुद्धपंचमः शुद्धधैवतः ॥
काकल्याख्यनिषादो विकृतपंचममध्यमः ॥
एतैः सप्तस्वरैर्युक्तो वराळीमेल ईरितः ॥
वराळी पूर्णतायुक्ता सग्रहांशा स्वमेलजा ॥
भिन्नपंचमभाषेयं सर्वयामेषु गीयते ॥

इति वराळी ॥

शुद्धाः सपरिधाः स्युर्विकृतपंचममध्यमः ॥
गांधारोंऽतरसंज्ञश्च काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः शुद्धरामक्रिमेलकः ॥
अत्र रागाः शुद्धरामक्रियाद्याः संभवंति हि ॥
रामक्रिरागः संपूर्णः क्रियांगमिति कीर्तितः ॥
षड्ज्ग्रहांशकन्यासः सायं सोऽयं प्रगीयते ॥

इति शुद्धरामक्रिया ॥

रामक्रियामेलजोऽयं संपूर्णो दीपकः स्मृतः ॥
षड्ज्न्यासग्रहांशोऽयं गेयो यामे तुरीयके ॥

इति दीपकः ॥

शंकराभरणो रागः संपूर्णः स्यात् स्वमेलजः ॥
षड्ज्ग्रहांशकन्यासः सायंकाले प्रगीयते ॥
मेलेऽस्य समपाः शुद्धा रिधौ पंचश्रुती निगौ ॥
काकल्यंतरसंज्ञौ च तैः स्वरैः सहितो मतः ॥
अस्मिन्मेले तु ये जाता उद्दिशामीह तान् क्रमात् ॥
शंकराभरणाख्योऽथारभी शुद्धवसंतकः ॥
सरस्वतीमनोहरी पूर्वगौळाभिधस्तथा ॥
नारायणी च नारायण्याद्यदेशाक्षिसंज्ञकः ॥
सामंतनामा कुरंजी तथासौ पूर्णचंद्रिका ॥
सुरसिंधुश्च जुलावुर्विलहारीतिनामिका ॥
गौडमल्लारकेदारावित्याद्याः परिकीर्तिताः ॥

इति शंकराभरणः ॥

शंकराभरणीयो यो मेलः स्यात्तत्र चारभी ॥
पूर्णा सांशग्रहन्यासा सायंगेया शुभप्रदा ॥

इत्यारभी ॥

शंकराभरणीयाच्च मेलाच्छुद्धवसंतकः ॥

2P



संपूर्णः सग्रहः सांशो रागांगमिति कथ्यते ॥

इति शुद्धवसंतः ॥

शंकराभरणाख्यातरागमेलसमुद्भवा ॥
पूर्णा सांशा निशागेया सरस्वतीमनोहरी ॥

इति सरस्वतीमनोहरी ॥

शंकराभरणीयेऽस्मिन्मेले स्यात्पूर्वगौळकः ॥
संपूर्णः सग्रहांशोऽपि गेयो यामे तुरीयके ॥

इति पूर्वगौळः ॥

शंकराभरणाख्यातरागमेलसमुद्भवा ॥
नारायणी गग्रहांशा संपूर्णा गीयते प्रगे ॥

इति नारायणी ॥

शंकराभरणीये हि मेले स्याद्गग्रहांशिका ॥
नारायण्याद्यदेशाक्षी पूर्णा गेया स्मृता प्रगे ॥

इति नारायणीदेशाक्षी ॥

शंकराभरणाख्यातरागमेलसमुद्भवः ॥
सामंतः सग्रहः सायं गेयः संपूर्णतां गतः ॥

इति सामंतः ॥

शंकराभरणीयो यो मेलस्तत्र कुरंजिका ॥
पूर्णोपांगं सग्रहांशा सायं गेया प्रकीर्तिता ॥

आरोहे गांधारधैवतलंघनम् ।

इति कुरंजी ॥

शंकराभरणीयोऽयं मेलोऽस्मात् पूर्णचंद्रिका ॥
पूर्णेयं सग्रहा सांशा सायं गेया प्रकीर्तिता ॥

इति पूर्णचंद्रिका ॥

शंकराभरणीयोऽसौ मेलोऽस्मिन् सुरसिंधुकः ॥
संपूर्णः सग्रहन्यासः सायं गेयः प्रकीर्तितः ॥

इति सुरसिंधुः ॥

शंकराभरणीयोऽसौ जुलावोमेंल ईरितः ॥
संपूर्णोऽयं सग्रहांशः सायमेष प्रगीयते ॥

अस्य प्रयोगो मंद्रपंचमादारभ्य मध्यपंचमपर्यंत एव ।

इति जुलावुः ॥

शंकराभरणीयोऽयं मेलस्तज्जा विलाहरी ॥
सग्रहांशा च सन्यासा पूर्णा प्रातः प्रगीयते ॥

आरोहे मध्यमलंघनम् ।

इति बिलहरी ॥

गौडमल्लाररागश्च शंकराभरणे मतः ॥
संपूर्णः सग्रहन्यासो वर्षास्वेष प्रगीयते ॥

इति गौडमल्लारः ॥

रागः केदारसंज्ञः शंकराभरणमेलजः ॥
संपूर्णः सग्रहः सांशः सायंकाले प्रगीयते ॥
धवर्जः षाडवः सोऽयमवक्रस्वरसंगतिः ॥

इति केदारः ॥

कांभोजी ककुभस्य स्याद्भाषा पूर्णा च सांशिका ॥
मनिवर्ज्यारोहिणीयं सायं गेया विचक्षणैः ॥
मेलोऽस्याः समपाः शुद्धा अथ पंचश्रुती रिधौ ॥
गांधारोंऽतरसंज्ञश्च कैशिक्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तस्तत्र जातास्त्वमी मताः ॥
कांभोजीनारायणाद्यगौळकेदारगौळकाः ॥
बडहंसस्तथा नागध्वनिश्छायातरंगिणी ॥
मनोहरीशपूर्वा च कांभोज्येदुकुलादिका ॥
कुरंजीनाटपूर्वा च कन्नडः पूर्णतायुताः ॥
दशाथ नटनारायण्यांधाली सामरागकः ॥

रागो मनोहसंज्ञश्च चत्वारः षाडवा इमे ॥
देवक्रियामोहनाद्यकल्याणाख्याविहौडुवौ ॥
आहत्य षोडशेतीमे कांभोजीरागमेलजाः ॥

इति कांभोजी ॥

कांभोजीमेलसंजातः नारायणाद्यगौळकः ॥
निषादग्रहविन्यासः पूर्णो यामे तुरीयके ॥

इति नारायणगौळः ॥

केदारगौळः संपूर्णः कांभोजीमेलसंभवः ॥
निन्यासांशोपांगमिह गेयो यामे तुरीयके ॥

आरोहे गांधारनिषादलंघनम् ।

इति केदारगौळः ॥

बडहंसः सग्रहांशः कांभोजीमेलसंभवः ॥
संपूर्णः सायमेवैष गेयः संगीतकोविदैः ॥

इति बलहंसः ॥

नागध्वनिस्तु भाषांगं कांभोजीमेलजः स्मृतः ॥
संपूर्णः सग्रहन्यासः सर्वदा गीयते बुधैः ॥

इति नागध्वनिः ॥

छायातरंगिणीरागः कांभोजीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सायाह्ने गेय ईरितः ॥

इति छायातरंगिणी ॥

कांभोजीमेलजा यदुकुलकांभोजिसंज्ञिका ॥
संपूर्णा सग्रहन्यासा सायंगेया प्रकीर्तिता ॥

इति यदुकुलकांभोजी ॥

पूर्णो नाटकुरंज्याख्यः कांभोजीमेलजोत्तमः ॥
सन्यासांशग्रहः सायं गेयः संगीतकोविदैः ॥

इति नाटकुरंजीरागः ॥

कांभोजीमेलसंजातो रागः कंनडसंज्ञकः ॥
संपूर्णः सग्रहन्यासः सायं सोऽयं प्रगीयते ॥

इति कंनडरागः ॥

नटनारायणीरागः कांभोजीमेलसंभवः ॥
निन्यूनः षाडवः षड्ग्रहः सायं प्रगीयते ॥

इति नटनारायणीरागः ॥

कांभोजीमेलसंजातेयमांधाली धवर्जिता ॥
षाडवा सग्रहन्यासा सायंकाले प्रगीयते ॥

इत्यांधालीरागः ॥

कांभोजीमेल उत्पन्नः सामरागो निवर्जितः ॥
षाडवः सग्रहन्यासः सदा गेयः शिवप्रदः ॥

आरोहे गलंघनम् ।

इति सामरागः ॥

रागः कांभोजिमेलोत्थो मनोहाख्यो निवर्जितः ॥
षाडवः सग्रहन्यासः सायं गेयोऽतिरक्तिदः ॥

अस्य मध्यमोऽल्पः ।

इति मनोहः ॥

देवक्रिया क्रियांगं स्यात् कांभोजीमेलसंभवा ॥
निलोपादौडुवा सा सग्रहांशा गीयते सदा ॥

इति देवक्रिया ॥

मेले मोहनकल्याणी कांभोज्याः परिकीर्तिता ॥
मनिवर्ज्या ह्यौडुवा सग्रहा सायं प्रगीयते ॥

इति मोहनकल्याणी ॥

शुद्धाः समपधाः पंचश्रुतिकर्षभ एव च ॥
साधारणाख्यगांधारः कैशिक्याख्यनिषादकः ॥

एतैः सप्तस्वरैर्युक्तो भैरवीमेलको भवेत् ॥
अस्मिन्मेले भैरवी चाहीरी घंटारवोऽपि च ॥
इंदुघंटारवो रीतिगौळ आनंदभैरवी ॥
हिंदोलाद्यवसंतश्च तत आभेरिरागकः ॥
धन्यासी नागगांधारी संपूर्णा इति विश्रुताः ॥
औडुवो हिंदोलरागो भैरवीमेलसंभवः ॥
उपांगभैरवीरागो धन्यासः सग्रहोत्तमः ॥
संपूर्णस्वरसंयुक्तः सायंकाले प्रगीयते ॥

इति भैरवी ॥

आहरी टक्कभाषेयं भैरवीमेलसंभवा ॥
संपूर्णा सग्रहन्यासा सायं सेयं प्रगीयते ॥

इति आहरी ॥

भैरवीमेलजो घंटारवो रागांगमीरितः ॥
धन्यासांशग्रहः पूर्णः सर्वदाप्येष गीयते ॥

इति घंटारवः ॥

इंदुघंटारवो रागो भैरवीमेलसंभवः ॥
सन्यासांशग्रहः पूर्णः सर्वयामेषु गीयते ॥
आरोहे धैवतलंघनम् । अवरोहे ऋषभलंघनम् ॥

इतींदुघंटारवः ॥

भैरवीमेलजो रागो रीतिगौळसमाह्वयः ॥
निन्यासांशग्रहः पूर्णः सायमेष प्रगीयते ॥
अवरोहे ऋषभवर्जनम् ।

इति रीतिगौळः ॥

हिंदोलाद्यवसंतोऽयं भैरवीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सर्वदाप्येष गीयते ॥

इति हिंदोलवसंतः ॥

आनंदभैरवीरागो भैरवीमेलसंभवः ॥

पूर्णः षड्जग्रहन्यासः सायमेष प्रगीयते ॥
इत्यानंदभैरवी ॥
आभेरीरागः संपूर्णो भैरवीरागमेलजः ॥
सांशः पंचमभाषाख्यः सायंकाले प्रगीयते ॥
इत्याभेरी ॥
उपांगं नागगांधारी भैरवीरागमेलजा ॥
संपूर्णा सग्रहन्यासा प्रातरेषा प्रगीयते ॥
इति नागगांधारी ॥
संपूर्णा धन्यासिकेयं भैरवीरागमेलजा ॥
सन्यासांशग्रहा प्रातर्गेया संगीतकोविदैः ॥
इति धन्यासी ॥
हिंदोलो भैरवीमेलसंजातो रिपवर्जितः ॥
औडुवः सर्वदा ज्ञेयः संगीतागमकोविदैः ॥
इति हिंदोलः ॥
सर्वेषु रागमेलेषु मुखारीमेल आदिमः ॥
शुद्धैः सप्तस्वरैर्युक्तो मुखारीमेल ईरितः ॥
चतुश्चतुश्चतुश्चैव षड्जमध्यमपंचमाः ॥
द्वेद्वे निषादगांधारौ त्रिस्त्री रिषभधैवतौ ॥
शुद्धा इत्युक्तसंख्याकश्रुतिकाः सादयो मताः ॥
अस्मिन्मेले मुखारी च ग्रामरागाश्च केचन ॥
लोके प्रसिद्धनामायं शास्त्रसिद्धाभिधस्त्वसौ ॥
शुद्धसाधारित इति तुलजेंद्रेण निश्चितः ॥
इति मुखारी ॥
शुद्धाः स्युः षड्जरिमपा गांधारोंऽतरसंज्ञकः ॥
पंचश्रुतिर्धैवतश्च कैशिक्याख्यनिषादकः ॥
मेलोऽयं वेगवाहिन्या एतैः सप्तस्वरैर्युतः ॥

मेलेऽस्मिन् सांप्रतं वेगवाहिन्येकैव दृश्यते ॥
षड्ग्रहांशकन्यासा संपूर्णा वेगवाहिनी ॥
स्वमेलजा दिनस्यांते ज्ञेया संगीतकोविदैः ॥

इति वेगवाहिनी ॥

शुद्धाः सपरिधाः साधारणगांधार एव च ॥
काकल्याख्यनिषादो विकृतपंचममध्यमः ॥
एतैः सप्तस्वरैर्युक्तः सिंधुरामक्रिमेलकः ॥
अस्मिन् मेले सिंधुरामक्रिया पंतुवराळिका ॥
सिंधुरामक्रिरागोऽयं संपूर्णः सग्रहांशकः ॥
सायंकाले तु गातव्यः स्वमेलोत्थो ह्ययं बुधैः ॥

इति सिंधुरामक्रीरागः ॥

षड्ग्रहांशकन्यासा पूर्णा पंतुवराळिका ॥
सर्वदेयं प्रगातव्या सिंधुरामक्रिमेलजा ॥

इति पंतुवराळी ॥

गांधारोंऽतरसंज्ञोऽन्ये शुद्धाः षड्जादयः स्वराः ॥
एतैः सप्तस्वरैर्युक्तो हेजिज्जीरागमेलकः ॥
हेजिज्जीप्रमुखा रागा अस्मिन्मेले भवंति हि ॥
हेजिज्जीरागः संपूर्णो यामेऽह्नो गीयतेंऽतिमे ॥
षड्ग्रहांशकन्यासः स्वमेलोत्थो मतः सताम् ॥

इति हेजिज्जी ॥

काकल्याख्यनिषादोऽन्ये शुद्धाः षड्जादयः स्वराः ॥
युता एते यत्र सामवराळीमेलकस्तु सः ॥
अस्मिन्सामवराळी च रागो गांधारपंचमः ॥
भिन्नपंचमरागाद्या रागा अन्ये भवंति हि ॥
रागः सामवराळ्याख्यः स्यात्संपूर्णः स्वमेलजः ॥
षड्ग्रहांशकन्यासः सायमेष प्रगीयते ॥

आरोहे गांधारलंघनम् ।

इति सामवराळी ॥

गांधारपंचमः सामवराळीमेलसंभवः ॥
संपूर्णः सग्रहन्यासः सायंकाले प्रगीयते ॥

इति गांधारपंचमः ॥

मेलात्सामवराळ्यास्तु जातोऽयं भिन्नपंचमः ॥
संपूर्णः सग्रहांशोऽपि सायमेष प्रगीयते ॥

इति भिन्नपंचमः ॥

शुद्धाः स्युः सरिमपधा गांधारोंतरसंज्ञकः ॥
कैशिक्याख्यनिषादश्च ह्येतैः सप्तस्वरैर्युतः ॥
वसंतभैरवीरागमेलः स्यात् पंचमाल्पकः ॥
मध्यमग्रामजन्यत्वसंदेहं जनयत्ययम् ॥
वसंतभैरव्येतस्मिंस्तथा ललितपंचमः ॥

इति वसंतभैरवी ॥

वसंतभैरवीमेलजातो ललितपंचमः ॥
संपूर्णः सग्रहन्यासः प्रातर्गेयः शुभप्रदः ॥

इति ललितपंचमः ॥

शुद्धाः स्युः सरिमपधा गः साधारणसंज्ञकः ॥
काकल्याख्यनिषादश्च ह्येतैः सप्तस्वरैर्युतः ॥
मेलः स्याद्भिन्नषड्जस्य भिन्नषड्जादयः पुनः ॥
केचिद्रागा भवंत्यत्र भिन्नषड्जश्च लक्ष्यते ॥
भिन्नषड्जः स्वमेलोत्थः संपूर्णः सग्रहांशकः ॥
रिन्यासः प्रथमे यामे गेयोऽह्नो गीतवेदिभिः ॥

इति भिन्नषड्जः ॥

भूपालो भिन्नषड्जीयमेलोत्थो मनिवर्जितः ॥
ओडवः सग्रहांशश्च प्रातर्गेयः शुभप्रदः ॥

इति भूपालः ॥

शुद्धाः स्युः समपा यत्र ऋषभः षट्श्रुतिस्तथा ॥
अंतराख्यातगांधारः पंचश्रुतिकधैवतः ॥
काकल्याख्यनिषादश्च स स्याद्देशाक्षिमेलकः ॥
देशाक्षीप्रमुखा रागा अत्र मेले भवंति हि ॥
देशाक्षीरागः संपूर्णः स्वमेलोत्थश्च सग्रहः ॥
सन्यासः प्रातःकाले तु गेयः संगीतकोविदैः ॥

इति देशाक्षी ॥

समपाः स्युस्त्रयः शुद्धाः षट्श्रुत्यृषभसंज्ञकः ॥
अंतराख्यातगांधारः पंचश्रुतिकधैवतः ॥
कैशिक्याख्यनिषादश्चेत्येतत्सप्तस्वरैर्युतः ॥
छायानाटस्य मेलोऽस्मिन्नेतदाद्या भवंति हि ॥
छायानाटः स्वमेलोत्थः संपूर्णः सग्रहांशकः ॥
उपांगं सायमेवैष गेयः संगीतकोविदैः ॥

इति छायानाटरागः ॥

शुद्धौ सपौ च ऋषभः पंचश्रुतिकसंज्ञकः ॥
शुद्धमध्यमगांधारस्ततः स्यादुच्चमध्यमः ॥
लौकिकोऽसौ शास्त्रतो विकृतपंचममध्यमः ॥
षट्श्रुतिर्धैवतश्च स्यात् काकल्याख्यनिषादकः ॥
एतैः सप्तस्वरैर्युक्तः सारंगस्य हि मेलकः ॥
सारंगप्रमुखा रागा अत्र केचिद्भवंति हि ॥
शुद्धस्य मध्यमस्यात्र गांधारत्वेनकीर्तनात् ॥
शुद्धमध्यमगांधारसंज्ञाऽस्यैव मया कृता ॥

इति सारंगरागः ॥

इतिश्रीभैरवीमेलजाता रागा निरूपिताः ॥
तुलजेंद्रेण संगीतसारामृत इह स्फुटम् ॥

इति शुभम् ॥